स्थानिसम्बन्धत्वमात्रवृत्तिधर्माश्रयोद्देश्यताकविधौ न स्थानिवत्त्वमित्यर्थे विसर्गस्थानिसम्बन्धत्वरेफमात्रवृत्तिरुत्वधर्माश्रयोद्देश्यकयत्वविधे कर्तव्यत्वेन स्थानिवत्त्वनिषेधाद् दोष इति वाच्यम् । रोरिति समुदायरूपस्याश्रयणेन रुत्वस्याल्मात्रवृत्तित्वेनाल्विधाविति निषेधाप्रवृत्त्या स्थानिवत्त्वस्य सुलभत्वेन दोषस्य तादवस्थ्यात् । विसर्गस्थानिनि रेफे रुत्वरत्वोभयधर्मस्य सत्त्वादतिदेशेन यथेच्छयाऽतिदेष्टुं शक्यत्वादुत्वानिरूपकर्तव्ये निषेधाप्रवृत्तिरित्युत्तराशय इति (१)प्राञ्चः । (२)नव्यास्तु स्ववृत्त्यलत्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितोद्देश्यतावद्भिन्नप्रकारप्रकारीभूतधर्मावच्छिन्नोद्देश्यताके कार्ये न स्थानिवत्त्वमित्यर्थः, तथा च स्वपदेन स्थानी गृह्यते स च रेफस्तद्वृत्तियोऽल्व्याप्यो धर्मः स च रुत्वं तदवच्छिन्ना स्थानिता रेफनिष्ठा तन्निरूपितोद्देश्यतावान् विसर्गः स धर्मी यस्य एतादृशो य आदेशप्रकारीभूतो धर्मः स च रुत्वं तदवच्छिन्ना रेफो रुशब्दश्च तन्निष्ठोद्देश्यतानिरूपितविधेयताश्रये यत्वरूपे कार्ये कर्तव्ये स्थानिवत्त्वनिषेधादेना सन्तीत्यादौ दोषाभावेनाऽस्याऽग्रहणप्रत्युदाहरणत्वासम्भवात् छन्दस्तु पय स्वित्यादावुक्तदोषस्य स्पष्टत्वादेतदेव तत्प्रत्युदाहरणमाख्येयम् । तत्र हि 'रो सुपि' इति विसर्गस्य स्थानी रुशब्दस्तद्वृत्तिरुत्वस्य रुशब्देऽपि सत्त्वादलव्याप्यधर्मत्वाभावेन रुत्वावच्छिन्नस्थानिताया अलत्वव्याप्यधर्मावच्छिन्नत्वाभावेन निषेधाप्रवृत्तावतिदेशेन रुत्वबुद्ध्या यत्वापत्तेर्दुर्वारतया प्रत्युदाहरणत्वोपपत्तिरिति तदाशयः । यदि च रो सुपीत्यत्रापि र इति पञ्चम्यन्तस्यानुवृत्तौ रोर्या रेफस्तस्य विसर्ग इत्यर्थ रुत्वावच्छिन्नस्थानिताया अलत्वव्याप्यधर्मावच्छिन्नत्वेनाच निषेधप्रवृत्त्योक्तस्थलीयदोषव्यावृत्तिस्तर्हि (३)अदृष्टार्थमस्याग्रहणमित्याह न च परिहृतार्थे लोकारे 'प्रहोऽलिटी'त्यत्र दीर्घशास्त्रेणाऽभिधानात् 'अचश्चे'ति परिभाषोपस्थितादिटोऽचो दीर्घ इत्यर्थे अच्त्वावच्छिन्नस्थानिताया अल्त्वव्याप्यधर्मावच्छिन्नत्वेन तादृशस्थानितानिरूपितोद्देश्यतावान् अग्रहीदित्यत्राग्रहीस इत् इति

(१) प्राञ्च इति । दीक्षितादय ।

(२) नव्यास्त्विति । नागेशप्रभृतय ।

(३) अदृष्टार्थमिति । अदृष्टोऽर्थः प्रयोजनं यस्य तत् अदृष्टार्थम् पारायणादि पुण्यजननप्रयोजनकमित्यर्थः ।

स्थितौ सकारात्पूर्वोदीर्घ ईकारस्तद्धर्म्मिकारोपमशरीभूतो धर्म्म इत्त्व तदवच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयत्व सलोपस्येत्यनल्वि धाविति निषेधादित्त्वस्यानतिदेशेन सलोपानुपपत्त्याऽग्नीदिति न सिद्ध्येदिति वाच्यम्। (१)तत्रापि अजभिन्नेट्त्वावच्छिन्नस्यैव स्थानित्वात्तादृशधर्म्मस्याल्त्वव्याप्यत्वाभावेन निषेधाप्रवृत्त्या स्थानिवत्त्वे- नेट्त्वाऽऽनयनात्सलोपे तदुपपत्ते । नचोक्तार्थस्वीकारे हे रामेत्यादौ सम्बुद्ध्यवयवस्य हल सस्य लोपे तद्वृत्ति सुप्त्वस्याल्धर्म्मत्वात्स्था निवत्त्वनिषेधे कथ पदत्वमिति वाच्यम् । (२) आनुमानिकादेशस्य रामेत्यस्य स्थानिवत्त्वात्सुबन्तत्वस्य तत्प्रयुक्तकार्यस्य वा लाभेन तदु- पपत्तेरिति दिक्॥

ननु उञ . पदत्वस्याव्यभिचरितत्वेन पदे इति तद्विशेषण व्यर्थ मित्यत आह—पदे किमिति । तदुत्तरयति—तन्नयुतमिति । अन्य तदाशय , पदे इत्यस्याग्रहणे तन्त्रय् (३)उतमितिस्थितौ उञ्प रत्वाद्यलोपापत्तिरतस्तद्ग्रहण सति च तस्मिन् उञ्परत्वेऽपि तस्यपदत्वाभावान्न तदापत्ति । नच लक्षणप्रतिपदोक्तपरिभाषया चादिपठितप्रतिपदोक्तस्यैवाऽत्र सूत्रे उञोग्रहणेन सम्प्रसारणनिष्प न्नस्य लाक्षणिकस्य तस्याग्रहणात्तत्रत्योक्तदोषान्वावृत्तौ व्यर्थमेव तद्विशेषणमिति वाच्यम् । उत्तरार्थत्वेन तस्य चारितार्थ्यात् । तथाहि, 'ङमो ह्रस्वादचि' इत्यत्र 'उञि च पदे' इत्यत पद ग्रहणमनु

(१) तत्रापीति । प्रश्लोऽलिन्त्यत्रापीत्यर्थ ।

(२) आनुमानिकेति । अनुमानसिद्ध आनुमानिक । तथ चानुमा निकस्थान्यादेशभाव शङ्कानित्यरत्नारणाय स्वीकृत । एतस्वन्पन्नु एतद्वुद्धि प्रमग एतन्बुद्धि स्तव्यनि । प्रकृते ह राम इति बुद्धि कर्त्तव्येति ।

अथवा हे रामस् इत्युच्चारणप्रसङ्गे उक्तानुशासनबलात् हे राम इत्युच्चार णीयम् । अथवा हे रामस् इत्यस्यस्थाने ह राम इत्यादेश, एतद्रूप आनुमानिक स्थान्यादेशभाव । तथाच रामेत्यादेशस्य स्थानी रामस् इति तद्वृत्तिसुबन्तत्वस्य स्थानिवद्भावेनादेशे सुलभतया पदत्व निराबाधमेवेति भाव ।

(३) उतमितीति । वेञ क्तप्रत्यये सम्प्रसारणे रूप सिध्यति ।

यत्र ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याजादेः पदस्य ङमुडिति व्याख्यानेन परमदण्डिनावित्यादौ न ङमुट् आचिरस्य पदत्वाभावादिति प्राञ्चः। वस्तुतस्तु पदे ग्रहणस्योत्तरसूत्रेऽपि नोपयोगः। तत्र पदस्येत्यनुवृत्त्यैव निर्वाहात्। तदनुवृत्तौ ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो ङमुडित्यर्थे उत्तरपदत्वे चेति प्रत्ययलक्षणनिषेधात्परमदण्डिन्यस्यान्तर्वर्तिविभक्त्या पदत्वासम्भवान्ङमन्तपदात्परस्याजोऽभावेनैव ङमुडोऽप्रसक्तेरित्युक्ताशय। यदि मापकुम्भवापेनेत्यादौ 'प्रत्ययलोपेऽपी'ति णत्वनिषेधसिद्धये उत्तरपदस्य कार्यित्व पक्षात् तथानिषेधेन प्रत्ययलक्षणप्रतिषेध इत्युच्येत तर्हि तत्र प्राप्तङमुण्निवृत्तये प्राचीनव्याख्यानमेव शरणम्। इति युक्तमेव पदग्रहणमुत्तरार्थमिति कथनम्। ननु 'हलि सर्वेषाम्' इत्यत्र पदेग्रहणमनुवर्त्य हलादौ पदे इत्यर्थलाभे वृक्षाभ्यामित्यादौ न नित्ययलोपः। किन्तु 'लोपः शाकल्यस्ये'ति वैकल्पिक एव स इति पदेग्रहणस्य प्रयोजनमस्तीति चेन्न। हलि सर्वेषामित्यत्र यकारस्यानुवृत्त्याऽनेन लोपाप्राप्त्या वैकल्पिक एव लोपे पदेग्रहणस्य निष्प्रयोजनत्वादित्यलम्॥

ननु रोऽसुपि इत्यत्राऽसुपिग्रहणाऽभावे तस्य सुप्यपि प्रवृत्त्या पश्चादहन्सूत्रस्य वैयर्थ्येन सामर्थ्यादुक्तसूत्रस्य सुपि न प्रवृत्तिरिति फलितत्वादसुप्यत्र तत्प्रवृत्तौ व्यर्थमेव तद्ग्रहणमित्यभिप्रायकं पूर्वपक्षमुद्भावयति—असुपि किमिति। तं समाधत्ते—अहोभ्यामिति। अयम्भावः, (१) तथा सति, अहः, अहोभ्यामित्यादौ नकारस्य रेफादेशे तस्य नलोपस्याऽसिद्धत्वेन प्राप्तनलोपाभावार्थमावृत्तेरावश्यकत्वेन लब्धप्रयोजनसूत्रस्यावकाशकत्वादनेनोक्तकल्पनाया वक्तुमशक्यत्वेन रोऽसुपीत्यस्य सुप्यपि प्रवृत्त्याऽनुक्तप्रयोगासिद्ध्यापत्तिरित्यावश्यकमेव सूत्रे तद्ग्रहणमित्यलम्॥

ननु सूत्रे दीर्घपदश्रवणात् 'अचश्चे'ति परिभाषोपस्थितावच एव दीर्घविधानात्सिद्धौ व्यर्थमेवाणग्रहणमित्यत आह—अणः किमिति। प्रत्युदाहरति—तृढः वृढः इति। तृहू वृहू धातुभ्यां क्तप्रत्यये ऊदित्त्वेन वेट्कत्वात् 'यस्य विभाषा' इति निष्ठायामिण्निषेधे ढत्वधत्व

(१) तथा सतीति। असुपीत्यस्याभावेऽहन्सूत्रविषये रोऽसुपीति सूत्रप्रवृत्ते सतीत्यर्थः।

ष्टुत्वढलोपेषु कृतेषु निष्पन्ने उक्तप्रयोगे ऋकारस्याच्त्वेन दीर्घापत्ति रतस्तद्ग्रहणं कृते च तस्मिन् ऋकारस्याण्त्वाभावान्नोक्तापत्तिः । न च परणकारेणाऽणो ग्रहणे सत्यपि तस्मिन् तथात्वात्तद्दोषस्तदवस्थ एवेति वाच्यम् । अत्र पूर्वेणैवाणग्रहणस्य सिद्धान्तितत्वात् । अपर्याप्तदोषेऽत्र सिद्धौ स्पष्टमेवाण्ग्रहणस्य वैयर्थ्यमिति भावः ॥

ननु 'ढ्लोपे' इत्यत्र सप्तमीश्रवणात्तस्मिन्निति परिभाषोपस्थित्यैव पूर्वस्येत्यर्थलाभादिष्टसिद्धौ सूत्रे पूर्वस्येति व्यर्थमेवेत्याशङ्कां समाधत्ते—पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थमिति । पूर्वग्रहणासत्त्वे 'अनुत्तरपदे' इत्यत उत्तरपदोपस्थितौ ढलोपनिमित्तयोरुत्तरपदस्थढरेफयोः परयोः पूर्वस्याऽणो दीर्घ इत्यर्थे अजर्घाः, लीढ इत्यादौ दीर्घानापत्तिः उत्तरपदस्थढरेफपरत्वाभावादुत्तरपदशब्दस्य समासचरमावयवे रूढत्वात् । न चाण्ग्रहणसामर्थ्यादत्र तत्र दीर्घ इति वाच्यम् । आतृढ आवृढ इत्यादौ दीर्घव्यावृत्त्यर्थत्वेन तस्य चरितार्थत्वात् । ननु सूत्रारम्भसामर्थ्यादेव दीर्घोऽस्त्विति चेन्न । नीरक्तं दूरक्त मित्यादौ तस्य सावकाशत्वात् । नन्वत्र ढ्लोपादेस्त्रैपादिकत्वेनासिद्धत्वाद्दीर्घोऽप्राप्त्या तत्र सूत्रसावकाशत्वप्रदर्शनमसङ्गतमिति वाच्यम् । सूत्रारम्भसामर्थ्यादेवासिद्धत्वस्य बाधेन दीर्घप्रवृत्तिरुपपत्तेः । सावकाशत्वप्रदर्शनस्य युक्तत्वात् । इत्यावश्यकेन पूर्वग्रहणेन सामर्थ्यादुत्तरपदानुपस्थितौ न काचिद्धानिः इति भावः ॥

मनोरथ इति । मनस् रथ इति स्थिते सकारस्य रुत्वे कृते प्राप्तयोरुत्वलोपयोर्मध्ये कः स्यादिति सन्देहस्य जातत्वादाह— विप्रतिषेधे परं कार्यमिति । यस्मिन्व्यतिहारे विद्यमानाद्विप्रतिपूर्वकात्सेधतेर्घञि निष्पन्नस्य विप्रतिषेधशब्दस्य परस्परविरोधरूपोऽर्थः । (१)नित्यान्तरङ्गापवादभिन्नोऽस्य सूत्रस्य विषय इत्यभिप्रेत्योक्तार्थकविप्रतिषेधशब्दस्य पर्यवसितमाह—(२)तुल्यबलविरोध इति । तस्मिन् सति परं कार्यमिति तेन बोधिते देवा हसन्तीत्यादौ सावकाशस्य 'हशि

---

(१) नित्यान्तरङ्गेति । नित्यस्यापरस्यान्तरङ्गस्य ज्ञापकत्वादिवाऽपवादस्य वचनप्रामाण्याद्बाधकत्वे निश्चिते तद्भिन्नोऽस्य विषय इत्याह नित्येत्यादि ।

(२) तुल्यबलेति । स्थाने स्थाने रुत्वोत्वलोपयोरेकत्र युगपत्प्राप्तिरूप सा

देऽश्च प्रातिपदिकत्वोपपत्तिः । ननु पर्युदासेनाऽर्थवत्त्वलाभेऽर्थवद्ग्रहणं व्यर्थमिति चेन्न । उत्तरार्थत्वात् । नचेहकरणं व्यर्थमिति वाच्यम् । इह किञ्चिन्नपो इति न्यायेनाऽर्थवत्त्वेनैव सादृश्यग्रहणे प्रमाणान्वेषणप्रयासक्लेशनिवृत्तिरूपफलेन साफल्यात् । प्रत्ययेऽप्रतिव्याप्तिवारणं तु अप्रत्ययपदावृत्त्योत्तरसूत्रघटककृत्तद्धितग्रहणबाधितया सुव्यक्तमेव । नचैतदेव गौरवं दूषणमिति वाच्यम् । नवीनोक्तार्थवत्त्वलक्षणपरिष्कारप्रकारप्रयासबाहुल्यापेक्षयाऽस्य लघुत्वात् । उत्तरसूत्रे पदार्थाभावपर्थाऽप्यधिकरणत्वमेवार्थवत्त्वमित्याहुः ।

ननु पाचक औपगव इत्यादौ प्रत्ययान्तत्वेन प्रत्ययान्तपर्युदासेन निषेधात्पूर्वसूत्रेण प्रातिपदिकत्वाप्रसक्तौ तदर्थमुत्तरसूत्रे कृत्तद्धितोर्ग्रहणावश्यकत्वेऽपि समासे राजपुरुष इत्यादौ (१) प्रत्ययग्रहणपरिभाषया ङसन्तस्यैव सन्तस्यैव च प्रत्ययान्ततदादित्वबाधनात्समुदायस्य प्रत्ययान्ततदादिभिन्नत्वेन पूर्वेणैव तत्सिद्धौ समासग्रहणं व्यर्थम् । नच राज्ञः कुमारी राजकुमारीत्यादावन्तरङ्गत्वेन हल्ङ्यादिलोपेऽनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावादर्थवत्तदादावपि तदादित्वारोपाद्राजन् ङस् कुमारी यस्य प्रत्ययान्ततदादित्वात्पूर्वसूत्रेण प्रातिपदिकत्वासिद्ध्या तदर्थं समासग्रहणं निष्प्रयोजनमिति वाच्यम् (२) अन्तरङ्गानपि विधीन्-

---

(१) प्रत्ययग्रहणपरिभाषयेति । प्रत्ययग्रहणं यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति परिभाषास्वरूपम् । यस्मात्प्रत्ययविधिरिति सूत्रे यस्मात्प्रत्ययविधिस्तदादीत्येको योगः प्रत्यये इत्यपरो योगः । गृह्यमाण उपतिष्ठते इतिशेषः । तथाच प्रत्यये गृह्यमाणे यस्मात्प्रत्ययविधिस्तदादी उपतिष्ठते इति तदन्तसिद्धिः । तदन्तांशसिद्धिस्तु विशेषणान्तराभावे शब्दस्वविशेष्यमादाय येन विधिरित्यनेनैव । अत एवोक्तपरिभाषा लभ्यते इति बोध्यम् ।

(२) अन्तरङ्गानपीति । प्रत्ययोत्तरपदयोश्चेति सूत्रमस्याः ज्ञापकं तथाहि, त्वत्पुत्रमित्यादौ उत्तरपदस्याऽन्तरङ्गत्वाद्विभक्तिनिमित्तकेन त्वमावेकवचने इत्यनेनैव त्वादेशसिद्धावुत्तरप्रत्यये परे त्वादेशविधानार्थमुक्तसूत्रं व्यर्थं सत्परिभाषां ज्ञापयति । तत्र पुत्रस्य पुत्र इत्यादौ तत्वममादिबाधनार्थं ज्ञापकीभूतोक्तसूत्रस्य

दिमूलोक्तो न नियमाकारः किन्तु साजात्यप्रदर्शनमात्रम्। तद्व्याका
रस्तु व्यर्थीभूतशास्त्रीयोद्देश्यतावच्छेदकव्यापकस्यैव यथार्थप्रयोजकशा
स्त्रीयोद्देश्यतावच्छेदकव्याप्य यद्रूप तद्रूपावच्छिन्नातिरिक्तत्वेन वैय
र्थ्यप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोच इत्येव तथ
च प्रकृते, व्यर्थीभूतसमासग्रहणरूपशास्त्रीयोद्देश्यतावच्छेदकसमास
सङ्गकार्थवत्वव्याप्य यद्रूप पूर्वभागपदघटितसंघातत्व तद्रूपावच्छिन्न
तिरिक्तत्वेन वैयर्थ्यप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नेऽर्थवा
सङ्कोच इति दिक्।

ननु रमा गौरीत्यादौ (१)(प्रातिपदिकग्रहण) इति परिभाषये
प्रातिपदिकपदेन ङ्याब्‌न्तस्यापि ग्रहणात्स्वादिसिद्धौ ङ्याप्प्राति
दिकादिति सूत्रे ङ्याप्ग्रहणं व्यर्थमित्याशयेन शङ्कते-प्रातिपदिकग्रहणे
लिङ्गविशिष्टस्यापीत्यादि। इत्थ हि समाधातुरभिप्रायः, उक्तसू
ङ्याप्ग्रहणाभावे, आर्य्यशब्दाट्टाप् प्राग् तरङ्गत्वात्कनि ततष्टापि आ
र्य्यकेत्यवस्थायामत्यानिकाकाराभावात् 'उदीचामि'त्यस्याप्राप्तौ 'प्र
त्ययस्थे'ति नित्यमित्वे आर्य्यिकेत्येकमेव रूपम्। एव लोहितशब्दान्ङीप
प्राग् तरङ्गत्वात्कनि ततष्टापि लोहितकेत्यवस्थायां तोपधत्वाभावे
'वर्णादनुदात्तात्तोपधात्तो नः' इत्यस्याप्राप्तौ प्रत्ययस्थेति नित्यमित्वे
लोहितिकेत्येकमेव रूपं स्यात्तु आर्य्यिका आर्य्यका लोहिनिका लोहितिके
ङ्याप्ग्रहणमावश्यकम्, कृते ङ्याप्ग्रहणे तु तत्सामर्थ्यात्ताभ्य
प्राक् न तद्धितोत्पत्तिरित्यर्थज्ञापनेन ङ्याबन्तादेव तद्धितोत्पत्ताव
स्तरूपसिद्धिरिति। सूत्रे ङ्याप्ग्रहणं स्त्रीप्रत्ययमात्रोपलक्षणमर्थात्स्त्री
प्रत्ययमात्र तद्धितोत्पत्तेः प्राग्भवतीति फलितम् तेन अश्व धूतर
युवतितरेत्यादेः सिद्धिः, अन्यथा स्त्रीप्रत्ययात्प्राक् तद्धितोत्पत्तावुक्त
प्रयोगोपपत्तिर्न स्यात्। (२) अत्र वयोवाचके वैकल्पिकजातित्वस्य
स्त्रीकाराज्ञातेश्चेति निषेधेन न पुंवत्त्वम्। तद्धितोऽपि व्याख्याना
त्समासान्ततिप्रत्ययाद्यतिरिक्त एव गृह्यते तेन युवतिः, बहुगोमत्केति
सिद्धम्। अन्यथा तिप्रत्ययात्कप्रत्ययात्प्राक् ङीपि युनस्ति बहुगोमतिकेति
स्यादिति प्राञ्चः। नागेशस्तु अत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेवा

(१) प्रातिपदिकग्रहणेति। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रह
णमिति स्वरूपम्।

(२) अत्रेति। युवतितरेत्यत्रेत्यर्थः।

त्पत्तिमङ्गीकृत्य लोहितालिङ्गबोधाय स्त्रीत्वेन विवक्षितेन लोहिनिका लोहितिकेतिपदद्वयम्प्रतिपाद्य आर्य्यायेत्येकमेव रूपमुक्तवान्। नागेशाभिप्रायेणेयमयुक्ता युक्ता चेति स्वयमूहनीया। वस्तुतस्तु स्वार्थद्रव्यलिङ्गसंख्याकारकेति पञ्चविधप्रातिपदिकार्थप्रयुक्तकार्य्याणां क्रमनियमः प्रथमं शब्दप्रवृत्तिनिमित्तत्वेन जातिबोधः ततो धर्मित्वेन प्रधानतया लिङ्गादिभिरपेक्षितत्वाच्च व्यक्तिबोधः ततः स्वमात्रापेक्षलिङ्गबोधः, ततो विज्ञातायक्रियापेक्षकारकापेक्षया सजातीयपदार्थान्तरसंख्याया प्रथममुपस्थितत्वेन संख्याबोधः ततः कारकरूपविभक्त्यर्थापेक्षया कारकबोधः ततो लिङ्गकार्य्योत्तरमेव तद्धितोत्पत्तिरिति नोक्तप्रयोगाणामनुपपत्तिरिति केचित्। उदाचामित्यारम्भसामर्थ्याच्चोक्तफलसिद्धिः। आर्य्यैव प्रतिकृतेत्यर्थे आर्य्यिकेत्यत्र 'इवेति प्रतिकृतावि'ति कन् प्राग्दापि तत्र सूत्रस्य चारितार्थ्यादित्यलम्॥

ननु रामशब्दात्सौ तस्य रुत्वे राम र् इतिस्थितौ 'उपदेशेऽजनुनासिक इत्' इत्येतद्दृष्ट्या रुत्वस्यासिद्धत्वादुकारस्येत्सञ्ज्ञालोपयोरभावेन स्थानिवत्त्वस्य विधाप्रवृत्त्या रेफान्तस्य 'सुप्तिङन्तम्पदम्' इति पदसञ्ज्ञाभावेन च विसर्गो न स्यादिति चेन्न। 'न मुने' इत्यत्र नेतियोगविभागात्सिद्धमिति व्याख्यानाद्रुत्वस्योक्तसूत्रदृष्ट्याऽसिद्धत्वाभावादुकारस्येत्त्वे लोपे च रेफस्य स्थानिवत्त्वेन विसर्गस्य सुलभत्वादित्याशयेनाह—रुत्वविसर्गाविति। 'ससजुषोरुरि'ति रुत्वे 'खरवसानयोरि'ति विसर्गे च रामः इति सिद्धमिति भावः॥

ननु 'अतो गुणे' इत्यस्य सकलदीर्घबाधकत्वेन रामाः इत्यादौ 'प्रथमयोरि'ति पूर्वसवर्णदीर्घो न स्यादित्याशङ्क्यापवादविषयबाध्यविशेषचिन्तापरकमूलन्यायेन समाधत्ते—पुरस्तादिति। (१) पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानि )ति न्यायाकारः। प्राक्वर्तिनोऽपवादा अनन्तरान् सन्निकृष्टान् विधीनेव बाधन्ते नोत्तरान् अनन्तरापेक्षया व्यवहितानिति तदर्थः। तथा च 'अतोगुणे' इति सूत्रं सवर्णदीर्घमेव बाधते न तु पूर्वसवर्णदीर्घमिति न दोष इति भावः, अयं न्यायो 'नादिचि' वीजग्रहणेन ज्ञापितः, तथाहि रामानित्यादौ

(१) पुरस्तादिति। अत्र च स्वपरोक्तबाधनीये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्ये पश्चादुपस्थितस्य तत्र परस्य बाधे मानाभावः, आकाङ्क्षाया निवृत्तेर्विप्रतिषेधशास्त्रबाधे मानाभावाश्चेति परिभाषायां बीजम्।

निषेधाभावाय सूत्रे तद्ग्रहणम् पररूपेण दीर्घबाधे हि तद्वैयर्थ्यं स्पष्टमेवेति दिक् ॥

ननु ( येन विना यदनुपपन्नं तत्तेनाक्षिप्यते ) यथा पीनोऽयं देवदत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वानुपपत्त्या रात्रिभोजनस्याक्षेपस्तद्वदङ्गं विना सम्बुद्ध्यनुपपत्त्या तथा तस्याक्षेपस्तथा च (येनाक्षिप्तस्यान्वयस्तस्य तत्रैवान्वयः ) इति न्यायादङ्गस्य सम्बुद्धिविशेषणत्वमेव न्याय्यम् । (१) (श्रुतानुमितयोः श्रुतसम्बन्धो बलीयानि ) ति न्यायात् एङ्ह्रस्वयोर्हल्विशेषणत्वमेव न्याय्यम् । तथाहि अङ्गात्परा–या–सम्बुद्धिस्तदवयवो–यो हल् स च लुप्यते एङ्ह्रस्वाभ्यां परीभूतश्चेदिति सूत्रार्थः समुचितस्तस्मिहायाऽन्यथा सूत्रार्थवर्णनमनुचितमित्याह—सम्बुद्ध्याक्षिप्तस्येति । अयमाशयः, तथा सति हे कतरदित्यत्राऽङ्गात्परीभूताया अदितिसम्बुद्धेरवयवस्य ह्रस्वात्परस्य हलस्तकाररूपस्य लोप आपद्येत, अतो लक्ष्यानुरोधात् ( श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान् ) इतिन्यायं तिरस्कृत्य, एङ्ह्रस्वयोरनुमितस्याऽप्यङ्गस्य विशेषणत्वमभ्युपेयम् । एवञ्च ह्रस्वात् साक्षात्परत्वाभावेन न तत्र सम्बुद्धिलोपः । नचाङ्गात्परा–या–सम्बुद्धिस्तदवयवो–यो हल्–स–च–लुप्यते–सा–च–सम्बुद्धिरेङ्ह्रस्वाभ्यां–परीभूता–चेदित्यर्थे अदिति सम्बुद्धेर्ह्रस्वात्परत्वाभावेनैव तत्रत्यातिव्याप्तिदोषव्यावृत्तिसम्भवे एङ्ह्रस्वयोरनुमिताङ्गविशेषणत्वे किम्फलमित्यत आह—हे कुलेति । उक्तार्थस्वीकारेऽत्राव्याप्तिदोषापत्तिः, तथाहि, अत्र 'स्वमोर्नपुंसकादि'त्यतः प्राक् परत्वात् 'अतोऽमि'ति सोरमादेशे 'अमि पूर्व' इति पूर्वरूपत्वे उभयत आश्रयणेऽन्तादिवद्भावाऽप्रवृत्त्या तदभ्युपगमेऽपि ह्रस्वसम्बुद्ध्योः पौर्वापर्य्यव्यवहारासम्भवेन तादृरूप्यस्याऽतिदेष्टुमशक्यत्वेन च सम्बुद्धेः ह्रस्वान्तात्साक्षात्परत्वाभावात् मलोपो न स्यात् । अतोऽन्याक्षिप्तस्याऽप्यन्यत्रान्वयः, अर्थादेङ्ह्रस्वयोरङ्गविशेषणत्वमङ्गीकार्य्यं तथा सति मूलोक्तार्थसम्पन्नत्वेन लोपोपपत्तिः सुलभा । नच ( २ )( एकदेशविकृतमनन्यवत् ) इति न्यायेन

( १ ) श्रुतानुमितयोरिति । श्रुतेनैव सम्बन्धो नानुमितेन प्रकरणादिप्रारेनेत्यर्थः । प्रकरणादितः श्रुतेर्बलवत्त्वात् इति भावः ।

( २ ) एकदेशविकृतमिति । मा दीव्यत इति सूत्रभाष्योक्तिरेवास्या शङ्का । तत्र हि दीव्यतिशब्दे[illegible]नुकरणमिदमित्यभिप्राय किमर्थं

दीर्घाभावमाशङ्क्य तदनित्यत्वेन समाधत्ते—कष्टायेति। न च रामायेत्यत्र यञादित्वसापेक्षदीर्घादेशस्य बहिरङ्गत्वादसिद्धत्वेन सन्निपातविघाताभावादुक्तपरिभाषाऽप्रवृत्तावनित्यत्वाभ्युपगमो विफल इति वाच्यम्। (१) परिभाषया दीर्घस्यासिद्धत्वबोधनेन सन्निपातविघाताभावेऽपि वास्तविकतद्विघातस्य जायमानतया सन्निपातपरिभाषाप्रवृत्तेर्दुर्वारत्वात्। किञ्च बहिरङ्गपरिभाषयाऽन्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वस्यैव बोधः क्रियते न तु बहिरङ्गशास्त्रे प्रवृत्ते तदसिद्धत्वप्रतिपादनमपीति सन्निपातविघातस्य परिभाषया दीर्घस्याऽसिद्धत्वप्रतिपादनद्वारा दूरीकर्त्तुमशक्यतया विघातस्य स्पष्टत्वेन सन्निपातपरिभाषाप्रवृत्तेरनित्यत्वं विना वारणोपायस्यादृष्टत्वात्। न चाऽनित्यताप्रयोजकनिर्देशस्य 'अकृत्सार्वधातुकयोरि'ति दीर्घेणैवोपपत्तौ तत्र ज्ञापकत्वं तस्य कथमिति वाच्यम्। तस्यापि सन्निपातपरिभाषयाऽप्रवृत्तेः। अनित्यत्वे तु सर्वं सूपपन्नमिति भावः। (२)किञ्चोक्तदीर्घविधायकशास्त्रस्याऽदन्तादिति पर्युदासेनाप्यस्य प्रवृत्तिरिति दिक्॥

बहुवचने किमिति। इत्थमेतदभिप्रायः, 'बहुवचने झल्येदि'त्यत्र बहुवचनग्रहणाभावे रामः इत्यादौ नेत्वापत्तिर्दोषः। 'प्रत्ययः परश्चे'त्यादिनिर्देशात् 'इदुदुपधस्य चाप्रत्ययस्ये'त्यादौ 'सम्बुद्धे'रित्यादिवत् 'सुपी'त्यनेनैव सिद्धे तद्ग्रहणेन च सावेत्वस्य भवतीति कल्पनात्। न च तदभावे रामस्येत्यत्रोक्तदोषो दुर्वार एवेति वाच्यम्। 'टाङसिङसामिनात्स्याः' इत्यनेन ङसः स्थाने स्य विधाय पररूपे कृते रूपसिद्धावदोषात्। न चोक्तसूत्रेण ङसोऽस्यविधाने इदम्शब्दान्ङसि निष्पन्नस्य अस्येति रूपस्य सिद्धिर्न स्याद्धलादित्वाभावेन हलि लोपाप्रवृत्तेरिति वाच्यम्। 'आपि लोप इति न्यासेन 'टोसोरनक्' इति न्यासेन च विषयविभागादुक्तलोपोपपत्तौ रूपसिद्धेः। न च रामाभ्यामित्यत्रैव दुर्वारमिति वाच्यम्। सुपि चेत्यस्यारम्भसामर्थ्यादेवोक्तदोषस्य निवृत्तेः। न चोक्तसूत्रस्य रामायेत्यत्र दीर्घविधानेन साफल्यादसामर्थ्यादित्युक्तिरसङ्गतेति वाच्यम्।

---

(१) परिभाषयेति। अन्तरङ्गपरिभाषयेत्यर्थः।

(२) किञ्चेति। ननु क्षत्रियाणीयादित्यादावपि सन्निपातपरिभाषानिरोधो दीर्घाभावस्य सूत्रवैयर्थ्येन सामर्थ्यात्परिभाषाबाधनात् इति दीर्घेणैव निर्देशोपपत्तावनित्यत्वे नासौ ज्ञापक इत्यरुचेराह किञ्चेति।

'टेरच' इति सूत्रकरणादकारोच्चारणसामर्थ्येन पररूपस्य बाधाद्दीर्घेणे चोक्तप्रयोगस्योपपत्तौ सूत्रवैयर्थ्यस्य स्पष्टतया सामर्थ्यादित्युक्ते सुस गते । एवञ्च बहुवचनग्रहणाभावे कुमाप्यदोषाभावाद्ग्रहणीयन्तदिति प्रकृताकूतम् । रामेष्वित्यादावेत्वविधानस्य चरितार्थतया रामाभ्या मित्यादावपि रामेभ्य इत्यादावप्येत्वं बाधित्वा दीर्घापत्तिरतस्तत्करण मावश्यकं कृते च तस्मिन् सामर्थ्यादेत्वमेव न दीर्घ इति न कापि शङ्काकलङ्कफक्किकेति सङ्क्षेप ॥

ननु 'बहुवचने झल्येदि'त्यत्र झल्ग्रहणाकरणे 'उतो वृद्धिर्लुकि हला'त्यतो हलीत्यस्यानुवृत्त्या बहुवचने हलादावेव तदेत्वविधानात्प्र थमा बहुवचने रामा इत्यादौ दोषाभावेन झल्ग्रहणमनावश्यकमेवेति शङ्कोत्थितौ समाधत्ते-झलि किम् । रामाणामिति । अयम्भाव झल्ग्रहणाभावे हलादौ बहुवचने सुप्येत्वमित्यर्थे रामाणामित्यत्रैत्वापत्ति रतस्तदावश्यकम् । न च सन्निपातपरिभाषाविरोधान्न तत्रैत्वापत्तिरिति वाच्यम् । झल्ग्रहणसामर्थ्यादेतद्विषये सन्निपातपरिभाषाऽप्रवृत्तिकल्प नेन तत्र तदापत्तेस्तादवस्थ्यात् । अतस्तन्निवृत्त्यर्थं झल्ग्रहणं कर्त्तव्य मेव कृते च तस्मिन्न दोषो नकारस्य झल्त्वाभावात् । एत्वे सन्निपात परिभाषाऽप्रवृत्तेरेव, 'अद सर्वनामि' त्यादिनिर्देशसङ्गतिरित्यलम् ॥

ननु मार्धमात्रालाघवाय-'बहुवचने झलीत्' इत्येवास्तु सूत्रमिति चेन्न । तथा सति 'ओसि चे'त्यत्रैकोऽनुवृत्त्या ओसि परे अकारस्यै गागमः स्यादित्यर्थे ज्ञानयोरित्यादौ 'इकोऽचि विभक्ता'विति नुमा- पत्तेः नित्यान्तरङ्गत्वात् 'आद्गुण' इत्यनेन गुणे जाते इगन्तत्वाभावा देव नुमोऽप्राप्तिरिति वाच्यम् । (१)(वार्णादाङ्गं बलीय ) इति न्यायेन प्राङ् नुम एव प्रवृत्ते । न च समाननिमित्तकत्वरूपसमानाश्रयत्वे एवो क्तन्यायप्रवृत्त्यङ्गीकारात्प्रकृते नुम्गुणविधायकयोरसमाननिमित्तक

---

( १ ) वार्णादाङ्गमिति । वर्णनिमित्तककार्यादङ्गनिमित्तिककार्यं बलव वतीत्यर्थं तथा च वर्णत्वव्याप्यधर्मावच्छिन्नोद्देश्यककार्यादङ्गत्वावच्छिन्नोद्देश्यक कार्यं बलवदिति फलितम् ।

अत्र ज्ञापकं तु अभ्यासस्याऽसवर्णेऽत्र या सवर्णग्रहणमेव, तथाहि परिभाषाऽसद्भावे इयतुरित्यादावन्तरङ्गेन सवर्णदीर्घेणेयङो बाधात्तुल्य रूपसिद्धौ व्यर्थमसवर्णग्रहणं परिभाषां ज्ञापयति । अपवादत्वात्प्राप्तेयङ

धेनोक्तन्यायस्याविषयत्वेनाऽप्रवृत्त्याऽन्तरङ्गत्वाद्गुणे नुमोऽप्राप्त्या न दोष इति वाच्यम् । आङ्यार्णयो समानकार्य्यित्वे एव तत्प्रवृत्ते. सिद्धान्तितत्वाद्विहोभयोरसमानकार्य्यित्वान्न्यायप्रवृत्त्या दोषस्य तादवस्थ्यात् । प्राक् प्रदर्शितो न्यायप्रवृत्तिविषयो नैव समीचीन , तथा सति दीर्घवृद्ध्योरसमाननिमित्तकत्वेन न्यायाऽप्रवृत्त्या इयाय, इयेये येत्यादेरसिद्ध्यापत्ते । सिद्धान्ते तु द्वित्वे कृतेऽन्तरङ्गसवर्णदीर्घस्य न्यायेनैव बाधाद्वृद्धौ रूप सिद्ध्यतीति भाव । 'बहुवचने झल्येत्' इति न्यासे तु बहुवचने झलीति सप्तम्या अचरितार्थत्वाज्झलादौ बहुवचने सुपि अत इदित्यर्थे 'आद्यन्तौ टकितानि'त्यनेन टित्कार्य्यस्याऽऽद्यवयवत्वविधानादकारात्प्रागिटि रामेभ्यो रामेष्वित्याद्यसिद्ध्यापत्ते । नच 'यत्तदेतेभ्य'इत्यादिनिर्देशात्सप्तमीनिर्दिष्टपदाना षष्ठ्यन्तत्वकल्पनमत इति षष्ठ्यन्तस्य च पञ्चम्यन्यतत्व सप्तमीनिर्देशश्च (१) (यस्मिन्वि-

---

न्यायाकृत्यर्थमसवर्णग्रहणस्य चरितार्थत्वे ज्ञापकत्व न सम्भवतीति नाऽऽशङ्क्यम् । तस्य येननाप्राप्तिन्यायेनेयङ्गियादिसकलदृश्यप्राप्तयणपवादत्वस्यैव निर्णयात् । इति प्राञ्च ।

नव्यमते तु अभ्यासस्याऽसवर्णे इति सम्पूर्णसूत्रमेवास्या ज्ञापकम् इयाय इयेयेत्यादावियङ्विधानाय सूत्रस्यावश्यकत्वे ज्ञापकत्वमसम्भवीति नाशङ्क्यम् । तत्र सूत्रसत्त्वेऽपि पूर्वप्रवृत्तगुणवृद्ध्योर्द्विर्वचनेऽचीति रूपातिदेशेनापहाराद्द्वित्वे कृते पुन प्राप्तगुणवृद्ध्योर्बाधन विधायाऽन्तरङ्गत्वात्सवर्णदीर्घापत्ते । इति व्यर्थीभूत सूत्र परिभाषा ज्ञापयति ज्ञापितायां तु तस्यां सवर्णदीर्घापेक्षया गुणवृद्ध्योरेव प्राबल्यात्सूत्र सार्थकमिति भाव ।

( १ ) यस्मिन्निति । यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषास्वरूपम् । यस्मिन्नल्ग्रहणे विशेषणीभूते यो विधिरारभ्यते स तदलादौ बोध्य अस्मात्सूत्र विषयताप्रयोजके सप्तम्यन्ते विशेषणताप्रयोजक पद यो विधि स तदलादौ बोद्धव्य इति यावत् । इय परिभाषा वाचनिक्येव नतु ज्ञापकसाध्या भाष्ये वचन रूपेणैवैषा पठिता नत्वत्र ज्ञापकमुपन्यस्तमिति भाव ज्ञापकजिज्ञासा चेदुच्यते अत्र नल्यपीतिसूत्र ज्ञापकम् । तथा हि परिभाषाऽसत्त्वे प्रदायेत्यादौ तदन्तविधे हलन्तकित्प्रत्ययपरत्वाभावाद्वेत्वाप्राप्त्या तद्व्यावृत्त्यर्थमुक्तसूत्र व्यर्थं सत्परिभाषा ज्ञापकम् ।

धिरि)ति परिभाषाप्रवृत्तिसम्पादकत्वाध्याहृतार्थस्तथा च झलादेर्बहुवचनस्य सुप इडागम इत्यर्थे न दोषस्तत्रेति वाच्यम् । तथा सति पचध्व इत्यादौ हल्लिलोपानापत्ते । गङ्गे इत्यादौ सम्बुद्धिलोपानापत्तेश्च । 'सम्बुद्धौ चे'त्यत्रोऽनुवृत्त्या तेन तद्विधानात्तस्य गुणे तस्य च पञ्चमासमासेन स्थानिवद्भावात् 'एङ्ह्रस्वादि'त्यस्याप्राप्तेर्विधानात 'हल्ङ्याबि' त्यस्याप्राप्तेश्चेत्यलं पल्लवितेन ॥

सुपि किम् । पचध्वमिति । अयम्भावः, सुपिग्रहणाभावे पचध्वमित्यत्र झलादिबहुवचने ध्वमि परे एत्वापत्ति । नच 'बहुवचने झल्येदि'ति न्यासे न तत्र दोष इति वाच्यम् । तथा सति (१) सङ्गसीरन्नित्यत्र सकारादिबहुवचने तदापत्ते । नन्वभादिसाहचर्येण सकारादिबहुवचनस्यापि सुप्प्रत्ययस्यैव ग्रहणादुक्तप्रयोगे दोषाभावाद्व्यर्थमेव तद्ग्रहणमिति वाच्यम् । पट्वी, मृद्वीत्यादौ गुणाऽभावाय 'घेर्ङिती' त्यत्रानुवृत्त्यर्थत्वेन तस्य साफल्यात् । नच टाप स्थाने टीप् इति न्यासेन नोक्तस्थले कश्चिद्दोष इति वाच्यम् । सवर्णानेकाऽनेककल्पनापेक्षया सुपिग्रहणकरण एव लाघवादिति दिक् ॥

जश्त्वमिति । अयम्भाव (२)(येन नाप्राप्ति) न्यायेन अवसाने विधीयमानस्य चर्त्वस्य पदान्तजश्त्वापवादत्वात्प्रागेव चर्त्वं ततो जश्त्वमिति । जश्त्वोत्तर चर्त्वोपन्यासस्तु न युक्त उक्तयुक्ते । अत एव जश्त्वमिति प्रतीकमुपादाय बाधित्वेति शेष इत्युक्तं नागेशेन न तु जश्त्वोत्तर चर्त्वमुक्तमिति सत्यम् ॥

ननु रामस्येत्यत्र 'अनचि चे'त्यनेन सकारस्य द्वित्वे तस्य 'खरि च'ति चर्त्वे तकारश्रवणापत्तिस्स्यादित्याशङ्का निराकरोति—सस्य द्वित्वपक्षे खरिचेति चर्त्वेऽप्यान्तरतम्यात्सस्य स एव न तु तकारोऽल्पप्राणतया प्रयत्नभेदादिति । तकारस्याक्तसूत्रेण चर्त्वेऽपि 'स्थानेऽन्तरतम' इत्यत्रत्य तमब्ग्रहणात्स्थानप्रयत्नाभ्यामन्तरतमेनैव

---

(१) सङ्गसीरन्निति । सम्पूर्वकाद्गम धातो 'समो गम्यृच्छिभ्यामि'त्यात्मनेपद आशीर्लिङि बहुवचने रूपम् ।

(२) येन नाप्राप्तीति । यमनाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति न्यायस्वरूपम् ।

देशेन भाव्यमिति योऽयमाद्यन्तस्थानजन्यत्वसमानाधिकरणविवृत स्वरूपाऽऽभ्यन्तरप्रयत्नवत्त्वसमानाधिकरणमहाप्राणरूपबाह्यप्रयत्नवत सकारस्य स्थाने तादृश सकार एवाऽऽदेशो जातो ननु तकारस्तस्य सकारेण समानस्थानिकत्वेऽपि स्पृष्टरूपाऽऽभ्यन्तरप्रयत्नवत्तया अल्प प्राणरूपबाह्यप्रयत्नवत्तया च तेन भेदादिति भाव । स्थानप्रयत्नाभ्या माऽऽन्तरतम्यस्याऽऽश्रयणे प्रमाणमाह—अत एव स' सीति तादेश आरभ्यत इति । उभाभ्यामाऽऽन्तरतम्यस्याऽनाश्रयणे खरिचेति चर्त्वेनैव (१)वत्स्यतीत्यादि सिद्धौ 'स स्यार्द्धधातुके' इत्यस्य वैयर्थ्यं स्यादिति तद्भावः । नचोक्तसूत्रसत्त्व वत्स्यतीत्यादौ ( चयो द्वितीये ) ति वार्त्तिकेन टिनाद्यादेशे पक्षे थकारघटित रूप सिद्ध्यति तच्चेदानीं स्यात् खरिचेति चर्त्वस्योक्तवार्त्तिकदृष्ट्याऽसिद्धत्वेनाऽऽदेशाप्राप्तेरिति तदर्थमुक्त सूत्रस्यावश्यकत्वेन ज्ञापकत्व कथमिति वाच्यम् । 'न मुने' इत्यत्र नेति योग विभागेन क्वचिदसिद्धत्वमेति कल्पनात्खरिचेति चर्त्वेऽपि थकारघटितरूपसिद्धौ बाधकाभावात्सूत्रवैयर्थ्यस्य स्पष्ट तयोक्तार्थे ज्ञापकत्वसम्भवादित्यलम् ॥

ननु रामशब्दादामि तस्य नुडागमे रामनामिति स्थितौ 'नामी'ति सूत्रापेक्षया 'सुपि चे' त्यस्य परत्वेन दीर्घेऽपि नामान्यतरहितपूर्वत्वविशिष्टाऽजन्तत्वरूपादेश्यत्वसत्त्वात् (पर्जन्यवल्लक्षणप्रवृत्ति ) इतिन्यायेन नामीत्यस्य प्रवृत्तिसम्भवेन कृताकृतप्रसङ्गित्वरूपनित्यत्वस्य सद्भावादनेनैव दीर्घो न तु तेन परत्वापेक्षया नित्यत्वस्य बलवत्त्वात्, एतच्च मूलोक्तशङ्कासमाधानप्रयासो विफल इति चेन्न । (२)(शब्दान्तरस्य प्राप्नुवन्विधिरनित्य ) इति न्यायेन नामीत्यस्य नित्यत्वविघातात् । न च ( एकदेशविकृतमनन्यवत् ) इत्यनेन न तस्य नित्यत्वहानिरिति वाच्यम् । तस्य न्यायस्य शब्दान्तरस्येति न्यायविषये प्रवृत्तेरनङ्गीकारात् । अन्यथाऽस्य न्यायस्य सर्वथा वैयर्थ्यापत्तेरितिभाव । नच नामशब्दमुच्चार्य दीर्घविधानात्प्रतिपदोक्तत्वेन नामीत्यस्यैव प्राक् प्रवृ

(१) वत्स्यतीति । वस् धातोर्लृटि रूपम् ।

(२) शब्दान्तरस्येति । एषा च परिभाषा वादे शित इति सूत्रभाष्ये स्पष्टा वचनरूपेण पठितेत्यर्थ । तत्र हि न्यविशतेत्यत्र विकरणे कृते विकरणान्त स्याऽट् अकृते विकरणे धातुमात्रस्याऽट् इत्यटनित्य इत्युक्तम् ।

न्य गणे पाठाभावात्सर्वनामसंज्ञकत्वाभावेन अकाद्युत्पत्तिर्न स्यात् तदन्तविधौ तु सर्वाद्यन्तस्यापि तत्वेन सुलभ एव अकादिरिति भावः । न चात्र प्रातिपदिकादित्यस्यानुवृत्त्या सर्वनाम्नस्तद्विशेषणत्वेन तदन्तविधिसिद्धौ ज्ञापकादिना पुनस्तदाश्रयणप्रयासो विफल एवेति वाच्यम् । समासप्रत्ययविधौ प्रतिषेध इति तन्निषेधेन ज्ञापकमूलकतदन्तविध्याश्रयणस्यावश्यकत्वात् । न च परमसर्वेत्यत्रावयवनिष्ठसर्वनामत्वेन सुबुत्पत्तितः प्रागेव अकादिसिद्धावलमेतेन तदर्थप्रयासेनेति वाच्यम । सर्वनामप्रकृतिकसुबन्तात्तलादयो भवन्तीति तद्विधायकसूत्रार्थे परमसर्वेति समुदायस्यैव सुबन्तत्वात् 'द्वन्द्वे चे'ति प्रथमार्थे सप्तमीति समुदाय एव संज्ञानिषेधपर्य्यवसानं नावयवे, अन्यथा वर्णाश्रमेतराणामित्यादौ सुडापत्तिः, सर्वार्थवाचकसर्वाद्यन्तत्वेन समुदायस्य संज्ञासौलभ्यात् । अवयवस्य संज्ञानिषेधेऽपि समुदायस्य सर्वार्थवाचकसर्वाद्यन्तत्वेन सुलभैव संज्ञेति दिक् ॥

ननु 'अनेकाल्शित्सर्वस्ये'त्येतदष्टकशिद्ग्रहणेन ज्ञापितया (१)(नानुबन्धकृतमनेकाल्त्वमि)ति परिभाषया तृ इत्यत्रानुबन्धकृतानेकाल्त्वाभावबोधनवत्प्रकृते श्यादेशस्यापि तया तथा बोधनेन मूलोक्तमतीवासमञ्जसम्' सर्वादेशेन विना शित्वस्यासम्भवेन शित्वात्सर्वादेश इत्यपि वक्तुमशक्यमिति चेन्न । इत्संज्ञावत्त्वमनुबन्धत्वमिति प्राचीनाभिमतानुबन्धत्वाङ्गीकारेण प्रकृते शकारस्य तदभावादुक्तपरिभाषाऽप्रवृत्त्याऽनेकाल्त्वस्यावतत्वेन मूलोक्तस्य समञ्जसत्वादित्याशयेनाह—अनेकाल्त्वात्सर्वादेश इति । अयम्भावः यथा तिप स्थाने डाणलौ सर्वादेशौ भवतः, आदेशविधानोत्तरमतिदेशेन प्रत्ययत्वमाश्रित्य डकारणकारयोरित्संज्ञा प्रवर्तते न तु ततः प्राक् प्रत्ययत्वाभावेनेत्वविधेरप्राप्तेः, तदानीमित्संज्ञकत्वाभावेन (नानुबन्धकृतमनेकाल्त्वमि)तिपरिभाषाऽप्रवृत्त्याऽनेकाल्त्वस्याहतत्वात् । तथेहापि विधानात् प्रागनेका

---

(१) नानुबन्धकृतमिति । अत्र शिद्ग्रहणं ज्ञापकं तथाहि परिभाषाऽभावेऽनुबन्धकृतानेकाल्त्वस्य ग्रहणादनेकाल्त्वादेव सर्वादेशसिद्धौ व्यर्थं शिद्ग्रहणं परिभाषां ज्ञापयति, ज्ञापितायामस्यां तु अनुबन्धकृतानेकाल्त्वस्याग्रहणात्सर्वादेशाय शिद्ग्रहणं स्वांशे चरितार्थमिति भावः ।

ल्त्वस्य सत्त्वात् अर्वणस्तृ इत्यादौ तु विधानात्प्रागेवेत्संज्ञाप्रवृत्त्या ऋकारस्यानुबन्धत्वेन तद्रहितस्य तकारमात्रस्यानेकाल्त्वाभावान्न सर्वादेश इति प्राञ्चः ।

नव्यास्तु, इत्संज्ञायोग्यत्वमनुबन्धत्वमित्यभ्युपगच्छन्ति तन्मते शकारस्येत्संज्ञायोग्यत्वेनाऽनुबन्धत्वात्परिभाषयाऽनेकाल्त्वाभावबोधनान्मूलोक्तासङ्गत्या शित्त्वात्सर्वादेश इत्येवोचितम्, इत्संज्ञायोग्यशकारवत्त्वमेवैतन्मते शित्त्वमित्यलम् ।

ननु उभशब्दस्य नित्यद्विवचनान्तत्वे 'उभादुदात्तो नित्यम्' उभशब्दस्य सर्वनामत्वे कोऽर्थ इति सूत्रकारभाष्यकारप्रयोगविरोध इति चेन्न । अर्थपरस्यैवोभशब्दस्य नित्यद्विवचनान्तत्वं न तु स्वरूपानुकरणपरस्य तस्येत्यभ्युपगतेरित्याशयेनाह मूले—**उभशब्दो द्वित्वविशिष्टस्य वाचक इति** । उभश्चासौ शब्दश्चेति विग्रहः, अत्र शब्देत्यस्य पूर्वनिपातो नाशङ्कनीयः, व्याप्यव्यापकयोर्मध्ये व्याप्यस्यैव पूर्वनिपातो न तु शब्दत्वस्येति भावः । स्वार्थद्रव्यलिङ्गसंख्याकारकेति पञ्चविधप्रातिपदिकार्थस्य सिद्धान्तसिद्धत्वेन द्वित्वविशिष्टस्य वाचक इत्यस्य द्वित्वसंख्याप्रकारकसत्त्वेनविशेष्यकार्थाभिधायीत्यर्थः । ननु पञ्चविधप्रातिपदिकार्थस्य सिद्धान्तितत्वात्प्रकृत्यैव संख्यार्थबोधस्योपपत्तौ विभक्तेः 'द्व्येकयोर्द्विवचनैकवचने' इत्यादेश्च नैरर्थक्यापत्तिरिति चेन्न । विभक्तेर्द्योतकत्वेन सूत्रस्य च नियमार्थत्वेन सार्थक्यादित्याशयेनाह—**अत एवेति** । द्वित्वविशिष्टेत्यस्य प्रकृतार्थत्वादेवेत्यर्थः, अनन्वितार्थकविभक्तिकपदानपेक्षयाऽनुवादकविभक्तेरेव न्याय्यत्वादाह—**नित्य द्विवचनान्त इति** । द्विवचनान्त एवेति तदर्थः ।

ननु स्यादिसर्वनामकार्याणामेकवचने बहुवचने च विधानदर्शनादुभशब्दस्य गणे पाठो विफल एव, न च 'सर्वनाम्नस्तृतीया चे'ति सूत्रेण उभाभ्यां हेतुभ्याम्, उभयोर्हेत्वोरिति षष्ठी तृतीया च तत्फलमिति वाच्यम् । निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति 'हेता'विति सूत्रभाष्योक्तवार्तिकेनैव तत्प्रयोगतार्थत्वात् । न चास्य वार्तिकस्य 'सर्वनाम्नस्तृतीया च'ेति सूत्रे वार्तिककृता पठितत्वेन तस्य सर्वनाम्न एव सर्वविभक्तिज्ञापकत्वं न त्वन्यस्येति वाच्यम् । भाष्ये 'हेता'विति सूत्रे तद्वार्तिकस्य पठितत्वात् । एवञ्चोक्तरीत्या गणपाठफलस्य सिद्धत्वादिहोभशब्दपाठो व्यर्थ एवेत्याशङ्क्य समाधत्ते—तस्येह पाठस्तु

उभकावित्यकजर्थ इति । गणपाठेन तस्य सर्वनामत्वात् ( अव्यय सर्वनाम्नामकज्‌ ) ति भाव ।

ननु कप्रत्ययेनाप्यभीष्टरूपस्य सिद्धौ गणेऽकजर्थं उभशब्दस्य पाठो व्यर्थ, न चाकचि कृते स्वरे विशेष इति वाच्यम् । प्रत्ययस्वरचित्स्व राभ्यामन्तोदात्तस्यैव सत्त्वेनाविशेषात् । अकचि कप्रत्यये वा कृतेऽन्तोदात्तस्वरस्यैव विधानमिति न कश्चिद्विशेष इति भाव । न च सुबन्तात्तद्धितोत्पत्तिरितिसिद्धान्तादकचि तत्प्रयुक्तमन्तोदात्तत्वमुभकाभ्यामित्यादौ सुबन्तस्य के तु प्रकृतेस्तदिति स्पष्ट एव विशेष इति वाच्यम् । तद्धितविधौ प्रातिपदिकादित्यधिकारात्तस्यैव प्रकृतित्वेनाविशेषात् । प्रातिपदिकमेवाकच प्रकृति स च ( अव्यय सर्वनाम्नामि ) तिन्यायबलेन सुबन्तात्परो भवतीत्यन्यदेतत्, (ओकार सकारभकारादौ सुपि सर्वनाम्नष्टे-प्रागकजि ) ति न्यायेन युष्मदस्मद् विषये तु सुबन्तस्यैवाकच प्रकृतित्व तस्यैव टे प्रागकजित्यवसेयम् । नचाकचि (१) (तन्मध्यपतित) न्यायेनाभशब्दग्रहणेन तस्य ग्रहणादुभावयवावयवौ यस्येत्यर्थे उभादुदात्तो नित्यम्, इत्ययचि उभयक इति रूप कप्रत्यये तु तादृश रूपन्नेति विशेष इति वाच्यम् । कश्चेदानीं काकचोर्विशेष इति 'सवादीना ति सूत्रस्थभाष्यप्रामाण्येन तादृश रूपानभिधानेन विशेषाभावादित्याशयेनाशङ्कते—न च कप्रत्ययेनेष्ट सिद्धिरिति । समाधत्ते—द्विवचनपरत्वाभावेनेति । टे पूर्वमकचा जायमानतया (तन्मध्यपतित) न्यायेनोभग्रहणेनाकज्विशिष्टस्य ग्रहणादुभशब्दस्याकचा न द्विवचनपरत्वविघात, कप्रत्ययस्य तु प्रातिपदिकात्परत्व जायमानतया व्यवधायकत्वेन तस्य द्विवचनपरत्वविघातकत्व स्पष्टमेव, एवञ्च यथा उभशब्दात्स्वार्थे त्रलि तसि च

( १ ) तन्मध्यपतितेति। तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति स्वरूपम्। नेदमदसोरकोरिति सूत्रेऽकोरिति निषेधोऽस्या ज्ञापक । तथा हि, एतदभावेऽकच्-विशिष्टेदमदसोरभावादेव ताभ्यामुत्तरस्य भिस ऐस्त्वाप्राप्त्या तद्व्यावृत्यर्थम कोरिति निषेधो व्यर्थं सदुक्तमर्थं ज्ञापयति, ज्ञापितेऽस्मिन्नर्थेऽकज्विशिष्टयोरिदम दसोरिदमदस्शब्दाभ्यां ग्रहणात्तदुत्तरस्य भिस ऐस्त्ववारणार्थमुक्तनिषेधश्चरितार्थ इति भाव ।

परेऽयच् भवति तथा प्रकृते च प्रत्ययेऽपि स स्यादिति समाधातुरभि प्राय । एतावतेऽयच प्रसङ्गं प्रदर्शयति, 'उभादुदात्तो नित्यमि ति सूत्र विभज्यते तत्र उभादुदात्त इत्येको योग, अत्र यागेऽस्वरितत्वेन 'द्वित्रिभ्यामि'त्यतो येत्यस्य नाऽनुवृत्ति, तत अवयवसूत्रे सख्या वाचिन उभयशब्दादवयविन्यर्थेऽयच् स्यात्, उभयो मणि, ततो नियम् उभशब्दात्वृत्तिविषये स्वार्थे नियमयच् स्यादिति उभयत उभयत्रेति सिद्धम् । ननु वृत्तिविषये स्वार्थे नियमयच् भवतीत्यस्योक्तत्वेन कृतेऽप्ययचि सुपार् लवायजिति चेत् । योगवि भागस्येष्टसिद्ध्यर्थत्वेन 'उभौ साभ्यासस्ये'ति निर्देशेन च यत्र न द्विवचनपरत्व तत्रैवायच् न तु वृत्तिविषये इति तदाशयात् । न च द्वि वचनपरत्वाभावेऽयच् नेष्ट इत्यत्र किम्प्रमाणमिति वाच्यम् । तदय माणवार्तिकस्यैव प्रमाणत्वात् । इत्याह—उभयोऽन्यत्रेति । स्वार्थिकाऽयजन्त उभय सोऽन्यत्र द्विवचनपरत्वाभावे प्रयुज्यते न तु द्विवचने । यत्रोभशब्दादुत्पन्नद्विवचनस्य लुका नापहारस्ततोऽन्यत्रायजिति वार्तिकार्थ । इत्थं चत्वाऽकजर्थं सर्वादिगण उभश ब्दपाठ स्थित, भाष्ये तु प्रत्याख्यात उभशब्दपाठ, स्वार्थिकप्रत्ययात्प्रकृतितोऽविशिष्ट भवन्तीति केऽप्यन्तरेण द्विवचन द्विवचन परत्वमन्तरा दयचोऽप्रवृत्ते । अत एव उभयोरमी उभौ भावित्यादौ नायच् प्रत्यु तस्मिन्न विभाग तस्य स्वार्थे विहित इति तत्तत्कारक शक्तिप्रधानावेवेति तयोर्द्वित्वसख्याप्रकारकमपेयविशेष्यकबोधक स्वरूप द्विवचन नेति, उभयशब्देनोभशब्दग्रहणवदयाप्तिनो वृत्तिमाक्षि विषयोरुभयोर्द्विवचनयोर्ग्रहणमित्यलम् ॥"

उभयोऽन्यत्रेति वार्तिकस्योभयो मणिरुभये देवमनुष्या इत्येक-वचनबहुवचनयोरेव भाष्योदाहरणादुभयशब्दस्य 'तद्धितश्चे'ति लक्षणेन प्राप्ताव्ययसज्ञावारणाय ( तसिलादय ) इति परिगणनाच्चो-भयशब्दस्य द्विवचने रूपस्याऽनभिधानमित्यतो नास्त्युभयशब्दस्य द्विवचनमिति कैयट । उदाहरणमनादरणीयमिति भाष्योक्तवचनेन पचतिरूपम्, पचतिकल्पमित्यादावव्ययत्ववारणाय परिगणनस्य चारितार्थ्यादस्य द्विवचने रूपाभावे विनिगमकाभावादस्तीति हरदत्त–इति भाव ॥

ननु उभयशब्दाज्जसि उभय जसिति स्थितौ नयप्रस्थानिकाऽय-

आदेशस्य स्थानिवत्त्वेन तस्य तप्प्रत्ययान्तरत्वात् 'प्रथमचरमे'ति विकल्पसंज्ञा दुर्वारेत्यत आह—तस्माज्जस्यपजादेशस्येति। अयम्भाव विकल्पसंज्ञाया विभक्तिसापेक्षत्वेन बहिरङ्गत्वम्, नित्यसंज्ञायास्तु तन्निरपेक्षत्वेनान्तरङ्गत्वमित्यन्तरङ्गत्वान्नित्यसंज्ञाया एव प्रवृत्तिरिति न दोष, न च नित्यसंज्ञाया सर्वार्थबोधकत्वरूपार्थस्य निमित्तत्वेन बहिरङ्गत्वमिति वाच्यम्। तादृशार्थस्योभयत्रापि निमित्तत्वात्। अर्थं कृतबहिरङ्गत्वस्यानाश्रयणाच्चेति प्राञ्च। अन्यास्तु–भाष्येऽयच प्रत्ययान्तरत्वेन स्थानिवत्त्व दुर्लभम्। किञ्च 'प्रथमचरमे'ति विकल्पविधायकशास्त्रस्य पक्षेऽभावबोधकत्वेन निषेधे तात्पर्य्यात् (१) (निषेधाश्च–बलीयांस) इति परिभाषया विकल्पसंज्ञाया एव प्राप्ति। किञ्च युगपत्प्राप्त्यसम्भवात् (अन्तरङ्ग–बलीयः) इत्यस्य नेह विषय, संज्ञानामन्योऽन्य बाध्यबाधकभावो नास्तीति प्रातिपदिकसंज्ञा समकालमेव सर्वनामसंज्ञाप्रवृत्ति। अत एव सर्वनाम्नो विहितत्वेन शीभावोपपत्ति। किञ्चान्तरङ्गपरिभाषयाऽपि समाधानमसमञ्जसम्। अन्तरङ्गे कृते बहिरङ्गासिद्धत्वबोधनस्याऽनया कर्त्तुमशक्यत्वात्। तस्मादभोक्तरीत्या यथोद्देशपक्षाश्रयणस्यैवोचित्यादित्याहुरिति दिक्॥

ननु 'न बहुव्रीहावि'ति सूत्रे बहुव्रीहाविरयत्र विषयसप्तमी तेन बहुव्रीहिविषये इत्यर्थस्तत्फलितमाह—बहुव्रीहौ चिकीर्षित इति। विषयसप्तम्याश्रयणे किम्फलमित्याह—त्वक पिता यस्येति। अयमाशय, बहुव्रीहौ सर्वनामसंज्ञा नेत्यर्थस्वीकारे युष्मद्सु पितृस्वित्यलौकिकविग्रहवाक्ये समासात्प्रागन्तरङ्गत्वादकचि समासे कृते सर्वनामसंज्ञानिषेधे कृतेऽपि जातस्याकचो निवृत्तिर्न स्याद्यथाऽतिभवकानित्यत्र, तथा सति सुपो लुकि मपर्य्यन्तस्य 'प्रत्ययोत्तरपदयोश्चेति' त्वादेशे 'नद्यृतश्चे'ति समासात्कपि त्वकत्पितृक इत्यापद्येत्, न चाकृतव्यूहपरिभाषया समासोत्तर सर्वनामसंज्ञानिषेधन निमित्तविघातस्य जायमानत्वात्प्रागेवाकच् न स्यात्किञ्च जातस्यापि तस्याऽनया निवृत्तिस्स्यादिति वाच्यम्। तस्य अनित्यत्वादसरणाधोक्तापत्तेर्दुर्वारत्वात्। विषयसप्तम्या उक्तार्थस्वीकारे तु युष्मद्सु इत्य

(१) निषेधाश्च बलीयांस इति। अन्तरङ्गादुपजीव्यादपि बलवन्त इत्यथ। विप्रतिषेधसूत्रभाष्य महत्त्विरस्या बीजम्। एतत्परिभाषासत्त्वादेव द्वन्द्वे च विभाषा जसीति चरितार्थम्।

यस्यायामेव बहुव्रीहेश्चिकीर्षितत्वात्सर्वनामसंज्ञानिषेधे नाऽकचोऽप्रवृत्त्या कप्रत्यये युष्मत्कात् पितृकस्मिति स्थितौ समासादिकार्ये कृते त्वत्कपितृकः इत्यादिसिद्धि फलम्। भाष्यकारस्तु, अकच् स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयमित्युक्तेस्त्वत्कपितृको मत्कपितृक इत्येव रूपे इष्टापत्तिं कृत्वा प्रत्याचख्यावेतत्सूत्रम्। ननु सूत्रकारभाष्यकारमतेन निषेधविधिरूपत्वाद्विकल्पस्यैवौचित्येन प्रत्याख्यानमयुक्तमित्याशङ्क्य समाधत्ते-यथोत्तरं मुनीनां प्रामाण्यमिति। सूत्रकारापेक्षया वार्त्तिककारस्यैतदपेक्षया भाष्यकारस्य प्रामाण्यम्, एवञ्च प्रकृते भाष्यकारोक्तप्रकार एव ज्यायानिति बोध्यम्। अत्र प्रमाणञ्च, 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्'—'चिन्विकृण्व्योर च'ेति सूत्रेऽकारविधानमेव, तथा हि तत्र लोपस्याऽनुवृत्तौ वलोपविधानेनैव 'न धातुलोप आर्द्धधातुके' इत्यनेन निषेधात् गुणाभावेन धिनोतात्यादिसिद्धावकारविधानं व्यर्थं सज्ज्ञापयति—यथोत्तरं मुनीनामिति। ज्ञापिते च तस्मिन्, उक्तनिषेधसूत्रस्य भाष्यकृता प्रत्याख्यातत्वेन गुणाभावार्थं तत्राऽकारविधानस्यावश्यकत्वेन स्थाने चारितार्थ्यं जातमिति दिक्॥

ननु सर्वनामसंज्ञाविधानमविशेषात्सर्वत्र स्यादत आह—(संज्ञोपसर्जनीभूतास्तु न सर्वादयः) संज्ञाभूता उपसर्जनीभूताश्च ये सन्ति ते सर्वनामसंज्ञका न भवन्तीत्यर्थः। यथा, कस्यचित्सर्व इति नाम तस्य चतुर्थ्येकवचने प्रकृतवार्तिकेन सर्वनामसंज्ञानिषेधात्स्मै कार्यस्याभावेन सर्वाय देहीत्येव न तु सर्वस्मै, एवमुपसर्जनत्वे, यथा, सर्वमतिक्रान्तोऽतिसर्वस्तस्य चतुर्थ्येकवचने उक्तरीत्या स्मायादिकार्याभावादतिसर्वायेत्येवेत्यलम्॥

उक्तवार्तिकप्रत्याख्यानप्रकारमाह—महासंज्ञाकरणेन तदनुगुणानामेव गणे सन्निवेशादिति। अयम्भावः, लघ्वक्षरं हि संज्ञाकरणमिति भाष्येण टिघुभसंज्ञावत् स इति सर्व इति वाऽल्पाक्षरसंज्ञाकरणादेवेष्टसिद्धौ सर्वनामेति महासंज्ञाकरणसामर्थ्यादन्वर्थेयं संज्ञेति विज्ञायते सर्वेषां नाम सर्वनामेति, तथा च, स्वप्रवृत्तिनिमित्तसमानाधिकरणद्रव्यधर्मिसामान्यधर्माश्रयवाचकत्वरूपसर्वार्थवाचकत्वविशिष्टानामेव गणे-पाठात्तेषामेव सूत्रेऽनुकरणत्वावश्यकत्वेन संज्ञाविधानमितरेषां गणेऽपाठादनुकरणत्वासम्भवेन न तेषां संज्ञाविधानम्, एवञ्च संज्ञोपसर्जनीभूतानां गणे पाठाभावादसर्वनामत्वेन स्मायादेः

सप्ताश्यस्याऽट्डादेरन्तर्गणकार्यस्य चाप्रसक्त्या तद्व्यावृत्त्यर्थमु क्त्यानिक निष्प्रयोजनमेवेति दिक् ॥

ननु अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्ग मुक्तसंशयमिति भाष्योक्त्या प्रकरणविषयस्मरणादेतत्प्रकरणस्थसप्तमीनां प्रथमार्थकत्वं तथा च, 'द्वन्द्वे चे'त्यत्र प्रथमार्थे सप्तमी द्वन्द्व सर्वनामसञ्ज्ञको न भवतीति तदर्थ, तत्र द्वन्द्वशब्दस्य समुदाये शक्त्या समुदायस्यैव सञ्ज्ञानिषेधो नावयवस्य। नचास्यैव तन्निषेधोऽस्तु समुदायस्य मास्त्विति वाच्य म्। तथा सति वक्ष्यमाणदोषापत्ते तथा हि अवयवमात्रस्य सञ्ज्ञानि षेधे तु सर्वार्थवाचकसर्वाद्यन्तत्वेन समुदायस्य सञ्ज्ञाया बाधकाभा वात्तत्वेन वर्णाश्रमेतराणामित्यत्र सुडापत्ति, अवयवस्य निषेधऽपि सर्वार्थवाचकसर्वाद्यन्तत्वस्यानपायेन तत्प्राप्तेः सुनभत्वात्। न च व्यपदेशिवद्भावादवयवस्य द्वन्द्वे निषेधात्समुदायस्य च निषेधो भवत्विति वाच्यम्। सत्येनमवयवस्य निषेधे फलाभावात्। एवञ्च पूर्वोक्तप्रकार एव युक्त इत्याशयेनाह—समुदायस्यैवाय निषेध इति ॥

ननु समुदायस्यैव सञ्ज्ञानिषेधस्योक्त्यादवयवस्य तन्निषेधाभा वात्तस्य तत्वेन सर्वनामान्ताङ्गात्परस्याम सुडित्यर्थे प्रवृत्ते सुटो दुर्वारत्वमित्यभिप्रायेणाशङ्कते—नचैव तदन्तविधिनासुडप्रसङ्ग इति। सर्वनाम्नो विहितस्याम सुडिति तद्विधायक शास्त्रस्य व्याख्यानकर णेन प्रकृते आम समुदायविहितत्वादवयवमात्रात्सर्वनाम्नोऽविहित त्वेन नोक्तापत्तिरेशोऽपातिभाव। नचाऽवयवस्य सर्वनामत्वादक जापत्तिर्दुर्वारेति वाच्यम्। अवयवमात्रेण कुत्साद्यप्रतीतौ तदप्राप्ते रिति दिक्।

ननु जराशब्दस्य जरसादेशविधानेन निर्जरशब्दस्य न स्यादि त्यत आह--पदाङ्गाधिकारे तस्य च तदन्तस्य चेति। पदमङ्गञ्च विशेष्य विशेषणेन च तदन्तविधिरित्येतत्सिद्धमिदम्। नन्वेव निर्ज रसमुदायस्यैवादेशापत्तिरित्यत आह (१)निर्दिश्यमानस्यादेशा भव न्तीति ॥

ननु सूत्रे जराशब्दोपादानान्निर्जरघटकजरशब्दस्य जराशब्दत्वा भावाद्देशो न स्यादित्यत आह—एकदेशविकृतमनन्यवदिति ॥

(१) निर्दिश्यमानस्येति। अत्र षष्ठीस्थाने योगेति सूत्र प्रमाणम्।

इत्युक्तेति । शुचिष्ट्वा यत्वेपाञ्चिग्मनामुक्त निर्जरसिन् निर्जर-
साम्निति तेषामयमाशय, 'विप्रतिषेधे परमि'ति सूत्रे परशब्द इष्ट
वाची तत्काव्यञ्च पूर्वविप्रतिषेधेन विभक्त्यादेश, भाष्यकृताऽर्थैव
सिद्धान्तितत्वात्, तथाहि, 'अचो जरसन्यतरस्यामि'ति सूत्रे
भाष्येऽजरसीत्यत्र नुमजरसो आभ्यां विप्रतिषेधेन जरसित्युक्त त
द्विभक्त्यादेशस्येष्टकार्यत्व सत्येव सङ्गच्छते, अन्यथा भयङ्करा
शोभनात्मानेष जरस प्रवृत्तौ तदाना सर्वनामस्थानाभावान्नुमोऽ
प्राप्त्या तेन सह विप्रतिषेधविचारस्य भगवता कृतस्य स्पष्टैवासङ्ग
ति स्यात्, मन्मत तु जरस प्राक् शाभावे जात तस्य सर्वनामस्था
नत्वेन नुम प्रसक्तावनेन जरसो विप्रतिषेधविचारो भाष्यकृत्कृतस्तन
सङ्गत एव, एवञ्च प्रकृते विभक्त्यादेशाज्जरसादेशयो प्राप्तौ पूर्वं पूर्व
विप्रतिषेधा विभक्त्यादेश एते तत एषि कर्त्तव्ये परत्वात्कारणस्य, अदा
देशे कर्त्तव्ये आचरणस्य च (१)(सन्निपात) परिभाषाऽनित्यत्वे नि
निगमकत्वात्तत्प्रवृत्ता जरसि निर्जरसिन् निर्जरसादितिरूप निर्वा
धमनेनि, सम्मताऽनुयायिनोऽप्येवमवाहु, परमेतच्चाप्यविरुद्धम्
तथा हि, भाष्यकृता 'बहुवचने झल्येत्' 'आसि च' 'आङि च' 'आप
सम्बुद्धौ चे'ति क्रमेण सूत्रपाठमङ्गीकृत्याऽऽपिर परत्वमित्यर्थेन
रामेण, अकारोच्चारणसामर्थ्यात्पररूपस्य बाधे दीर्घेण रामादिनि
वोपपाद्याऽऽति दीर्घोच्चारणमिति इकारोच्चारणञ्च प्रत्याख्यातम् ।
उत्तरपक्षस्येष्टत्वे तु अतिजरैरिति भविष्यत्य सन्निपातपरिभाषयैवेति
भाष्यात् प्रत्याख्यानपरभाष्यस्य विरोध स्यात् । तदुक्त कर्त्तव्य
प्रत्याख्यानं सम्भवति न तु फलभेद इति, प्रागविभक्त्यादेशे इकारो
च्चारणसत्त्व निर्जरसिन् इदानीं निर्जरेण, एवमाति दीर्घोच्चारणसङ्घाधे

---

तथाहि 'षष्ठीस्थाने योगे'ति सूत्रमावर्तत इत्र द्वितीयस्यायमर्थ, षष्ठी यस्य प्रत्य
यग्रहणपरिभाषया षष्ठ्यन्तमित्यर्थे निर्दिश्यमानमितिपदस्याध्याहार, तथा च
षष्ठ्यन्त निर्दिश्यमान स्थाननिरूपितसम्बन्धेन युज्यते सूत्रे निर्दिश्यमानस्याध्याय
माणस्य षष्ठ्यन्तस्य कार्यासम्भवेन स सजातीय गृह्यते, अत सिद्ध निर्दिश्यमान
स्येति ।

(१) सन्निपातेति । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति
परिभाषास्वरूपम् ।

निर्जरसात् अधुना निर्जरसदिति फलभेदात्प्रत्याख्यानासम्भवेन विरोधस्य स्पष्टत्वादुपेक्ष्य तन्मतमिति भाव । नच नुकारोच्चारणप्रत्याख्याने अनेनेत्यत्र हलि लोपापत्तिर्दुर्वारेति वाच्यम् । 'टौसोरनक' 'आपि लोप' इति सूत्रद्वयेनोक्तापत्तेरभावात् । किञ्च, 'अनाप्यक' इति सूत्रे, अ इति नपुंसकनिर्देशात् नकारे आपि च परे अनादेश इत्यर्थे विशिष्य नकारेऽनादेशविधानसामर्थ्यादुक्तलोपस्य बाधादिति दिक् ॥

नु प्रत्ययविपत्तिरित्यादौ पररूपस्य स्थानिवद्भावादकारव्यवधान द्वारा णत्वाभावायाऽऽवश्यकेन 'अच परस्मिन्'इत्यत्र पूर्वविधावित्यस्याऽऽवृत्त्या लब्धेन पञ्चमीसमासेन क्षोष्ण इत्यत्राऽकारलोपस्य स्थानिवद्भावेन व्यवधानाद्धकारस्य पकाराऽव्यवहितात्तरत्वाभावेन णत्व न स्यादित्याशङ्क्य समाधत्ते—इह पूर्वस्मादपीति । उक्तरीत्या स्थानिवद्भावादकारव्यवधाने तु 'अट्कुप्वाङ् नुमि'त्यनेन तत्र णत्व मिति बोध्यम् । किञ्च प्रविगणय्येति भाष्योदाहरणसिद्धये पञ्चमीसमासस्याऽऽश्रितत्वाऽभ्युपगमे तु 'स्थाभ्यामि त्यनेनैव णत्व सुलभ मिति न कश्चिद्दोष' नदुक्तिस्पष्टत्व च पूर्वोक्तभाष्योदाहरणमेव मानम्, अन्यथा ज्ञापीपर्यन्तं ... कारव्यवधानाल्लघुपूर्वकत्वाऽभावेन ल्यपि लघुपूर्वादि'ति णयादेशो न स्यात्, अत एव हे गौरित्यत्र वृद्धे स्थानिवत्त्वेन सम्बुद्धिलोपो नेत्यभिप्रायेणाह—इतिपदेसिति । अनित्यत्वसूचक एव तु शब्द प्रयुक्त इति भाव ।

पूर्वत्रासिद्धेनेति । अतिदेशशास्त्रदृष्ट्या त्रेपादिकशास्त्रस्यासिद्धत्वान्न्यायसिद्धोऽयम् । तत्फलन्तु वतिघटितानामतिदेशान्तराणां त्रिपाद्यामपि प्रवृत्तिरूपम् तेषां तत्र प्रवृत्तिर्म्वीकारादेव, अमी, क्षीरपणेत्यादौ मात्वणत्वे भवत, अन्यथाऽतिदेशदृष्ट्या मीत्वणत्वयोस्त्रैपादिकत्वेनाऽसिद्धत्वात्तौ न स्याताम् । अत्रैकारस्याद शब्दसम्बन्धि न प इत्यस्यैवाऽनुत्तरपदत्वञ्चा तवद्भावाधीनमिति भाव ॥

तस्य दोष इति । वाचनिकमेवेदमतु ज्ञापकसिद्धम् । न च 'नमुने' इति सूत्रे ने इति योगविभागेन ज्ञापितमस्तु तद्वाचनिककथन मयुक्तमिति वाच्यम् । भाष्ये योगविभागस्यादर्शनेन ज्ञापकसिद्धत्वस्यासम्भवात् । अत एव वार्त्तिककृता सिद्धकाण्डमारभ्य 'न लोप सुपि'ति सूत्रञ्च सूत्रकृता कृतम् । अस्योदाहरणानि च, चमयच-निगादयसे मायवपनीत्यादीनि बोध्यानीति दिक् ॥

ननु भाष्ये ककुब्ध दोश्चेति द्वन्द्वे प्रातिपदिकत्वेन औ विभक्तौ 'पद्दन्नि'ति सूत्रेण, आवित्यस्य शसादित्वाभावाद्दोषन्नादेशो न स्यादत आह—प्रभृतिग्रहणं प्रकारार्थमिति। प्रकारो भेदसादृश्य, तच्च, साधारणधर्मसम्बन्धप्रयोज्य, साधारणधर्मत्वञ्चोपमानोपमेयोभय वृत्ति, उपमानत्वञ्च साधारणधर्मवत्त्वेनोपदितरपरिच्छेदकत्वम्, उपमेयत्वमप्येवमेव, तथा च, साधारणधर्मस्य सुत्वस्य स्वादौ शसादौ च वृत्तिरवात्तेनैव सादृश्यग्रहणं न तु शब्दत्वेनेति बोध्यम्। सुत्वेन-सादृश्यग्रहणे ककुद्दोषणीति-भाष्यप्रयोग एव मानम्, तथाहि, शस्प्रभृतिष्वित्युच्यतेऽथास्प्रभृतिष्वपि दृश्यते ककुद्दोषणी या च ते महादेव इत्युक्तभाष्ये, तेन सुत्वेनैव सादृश्यग्रहणे भाष्यकृत्तात्पर्यम्। अत एव 'हृदयस्य हृल्लेखयदण्लासेषु' 'वा शोकष्यञ् रोगेष्वि'ति सूत्रद्वय सङ्गच्छते, अन्यथा, शब्दत्वेन सादृश्यग्रहणेनैव हृल्लेख, हृल्लोक इत्याद्युपपत्तावुक्तसूत्रद्वयस्य वैयर्थ्यं स्यात्। न च सुत्वेन-सादृश्यग्रहणे स्वाद्यावपि सर्वत्र पदाद्यादेशापत्तिरिति वाच्यम्। सुप्रभृतिष्वित्यस्य वक्तव्यत्वे शस्प्रभृतिष्विति कथनात्क्वचिदेवाऽत्र तद्विधानात्। एवञ्चावित्यस्य स्वरूपेण शस्निर्देशं सुत्वेन तत्सादृश्यञ्च, ततस्तस्मिन्परे दोषन्नादेशे ककुद्दोषणीति सिद्धम्। फलञ्च, पद्ङ्घ्रिश्चरणोऽस्त्रिया स्यात् हृन्मानस मन इत्यादौ 'न लुमते'त्यस्याऽनित्यत्वात्प्रत्ययलक्षणेनाऽन्तर्वर्तिविभक्त्या सुप्परत्वेन पादशब्दस्य पदादेशो हृदयस्य हृदादेशश्च सूपपन्न इति दिक्॥

ननु विश्वपाशब्दस्य प्रथमाद्वितीययोर्द्विवचने प्राप्तपूर्वसवर्णदीर्घस्य 'नादिची'त्यनेन निषेधाज्जसि सत्यपि तस्मिन्दोषाभावेष्टरूपसिद्धौ 'दीर्घाज्जसि चे'ति सूत्र व्यर्थमित्याशङ्क्य समाधत्ते—यद्यप्यौङि नादिचीत्येव सिद्धमिति। अयम्भाव, उक्तसूत्राभावे गौर्यौ गौर्य्ये इत्यादौ नादिचीत्यस्य प्राप्त्या निषेधाभावात्पूर्वसवर्णत्वेऽनिष्टरूपापत्तिरिति तन्निषेधार्थमावश्यक दीर्घाज्जसि चेति सूत्रमिति। न च 'युवन्याख्यौ नदी' 'त्यादिभ्य' इत्यादिनिर्देशादिक् प्रत्याहाराऽच्प्रत्याहारयोरेव निरूढलक्षणाह्वाकाराद्यार्थस्याच्त्वाभावेन गौर्यावित्यादौ पूर्वसवर्णदीर्घाऽप्रसक्त्या निषेधसूत्र व्यर्थमेवेति वाच्यम्। एतन्निषेधसामर्थ्यादेवेगजभिन्नप्रत्याहारेष्वप्युक्तलक्षणस्वीकारात्। अत एव, शसि गौरीरित्यादौ पूर्वसवर्णदीर्घसिद्धि, अन्यथोक्तरीत्या न स्यात्। क्वचित्त 'प्रथमयोः पूर्वसवर्णदीर्घ'इत्य

स्याऽनन्तर दीर्घाच्छस्येव पूर्वसवर्णदीर्घ इत्यर्थकदीर्घाच्छसीत्येव सूत्रकरणाच्चकाराकरणेन नेत्यस्यानुवर्त्तनेन च लाघवमित्याहु। केचित्तु शसि पूर्वसवर्णदीर्घश्चेद्दीर्घादेवेति विपरीतनियमधारणाय 'नृपे' कानाम्रेडिते' इत्याद्यनुसन्धाने ज्ञानगौरवाद्यथोक्तन्यास एव युक्तियुक्त इति वदन्तीति दिक्॥

ननु—'आत' इत्येव सूत्रमस्तु लोपानुवृत्तावाकारान्त यदङ्ग भ तस्य लोप इत्यर्थे विश्वप इत्यादिसिद्धौ धातोरिति व्यर्थमित्याशयेन शङ्कते—धातोः किमिति। समाधत्ते—हाहानिति। अव्युत्पन्न मिदम्, हाहा हूहूश्चैवमाद्या इत्यमराक्ते। अत्राऽऽकारलोपेनेष्टप्रयोगा नापत्तिरिति तदर्थमावश्यक धातुग्रहण तस्य सत्त्वे धातुत्वाभावान्न तत्राऽऽकारलोप। नचाऽस्य हेति कष्ट जहातीति व्युत्पत्त्या क्रिया—शब्दत्वाल्लोपस्येष्टत्वे प्रत्युदाहरणदानमयुक्तमिति वाच्यम्। तथा सति सानित्यस्यैव प्रत्युदाहरणत्वात्। अकारो वासुदेवस्तेन सह वर्तन्त इति सास्तान् सानिति तदुपपत्तेरिति प्राञ्च।

नव्यास्तु 'क्त श्च' इत्यादिसौत्रप्रयोगोपपत्तये वार्तिककृताप ठ्यत्तस्य (आतो भाप) इति वार्त्तिकस्य आतो धातोरित्यत्राऽऽत इति योगविभागेनोक्तसौत्रप्रयोगोपपत्तिं विधाय भगवता प्रत्याख्यानकरणादुक्तप्रत्युदाहरणप्रयोगस्याभिधाने तु लोपस्येष्टापत्तिरेव। न चैव व्यावर्त्याभावेन सूत्रे धातुग्रहणमेव तदा व्यर्थमिति वाच्यम्। आ बन्तनिवृत्त्यर्थ तस्याऽऽवश्यकत्वेन सार्थक्यात्। नचाऽऽकारातेभ्य आचारक्विपि तदन्तात्कर्तृक्विपि तत्र लोपार्थमस्तु धातोर्ग्रहणमिति वाच्यम्। तादृशप्रयोगस्याऽनभिधानादित्यलम्॥

ननु नित्यस्त्रीलिङ्गयोर्दीर्घेदूदन्तयो 'यूस्त्र्याख्यौ नदी'त्यनेन नदीत्वविधान दीर्घेदूदन्तयो स्त्रीलिङ्गयोर्ह्रस्वेदुदन्तयोः ङितिह्रस्वश्चे' त्यनेन वैकल्पिक तद्विधान प्रकृतेऽपि यूहणपदयोरनुवर्त्तनात्सा मान्यतस्तत्र घिसञ्ज्ञाविधानादिष्टरूपापपत्तौ शेषग्रहण व्यर्थमित्यभिप्रायेण शङ्कते-शेष' किमिति। उत्तरयति—मत्यै इति। अयमभिप्राय अत्र नदीसञ्ज्ञापक्षे घित्वात् 'आण्नद्या' इत्याटि गुणाऽऽटे रुभयोरिष्टरूपसिद्धिरिति समाधातुरभिप्राय, वस्तुतस्तु पुंल्लिङ्गे नपुसके च सावकाशाया घिसञ्ज्ञाया परत्वादपवादत्वाच्च नदीसंज्ञया बाधेन तदप्राप्तौ शेषग्रहण व्यर्थं, नच गवा पत्यै स्त्रियै इत्यादौ सञ्ज्ञायास्सावकाशत्वादपवादत्वासम्भवेन घित्वस्य तथा

पत्तौ भासदोषवावृत्त्यर्थं शेषग्रहणमावश्यकमिति वाच्यम्। मह्यैक मुदाहरणयोगारम्भं प्रयोजयतीति भाष्यात् 'पतिः स्त्रियामि'त्यनेनैवात्र प्रयोगसिद्धौ सामान्यसूत्रस्य वैयर्थ्यापत्त्या तद्बाधे तद्वैयर्थ्यस्य स्पष्टत्वात्। इत्याशयेनाह—एकसंज्ञाधिकारात्सिद्धे शेषग्रहणं स्पष्टार्थमिति। अधिकारश्च 'कडाराः कर्मधारये' इत्येतदवधिक एतत्पर्यन्तमेवाधिकारस्य श्रुतिविषयत्वात्। नैव पुरुषपरस्मैपदसंज्ञयोरेकत्र समावेशापत्तिरापत्तिश्च गुरुलघुसंज्ञयोर्बुधिम-ञयोश्चैकत्र समावेशप्रसक्तिरिति वाच्यम्। पूर्वत्र 'युष्मद्युपपदे' इति ज्ञापकादेव तदुपपत्तेः। परत्र यस्य लघुगुरुसंज्ञे तदन्तस्य न घिसंज्ञा स्यादिति भिन्नाऽवधिकत्वेन समावेशाद्विरहात्॥

ह्रस्वौ किम्। वातप्रम्यै। ह्रस्वग्रहणाकरणे यू इत्यनुवृत्तौ दीर्घयोरेव घित्वविधानाद्ध्रस्वयोरप्राप्त्या मूलोक्तप्रत्युदाहरणासङ्गतिः। नन्वत्र 'नाविरयमन्तः स्याऽसखीति' पर्युदासकरणात् 'पति समास एवे'त्यस्यारम्भसामर्थ्याच्च ह्रस्वयोरेव घित्वं न दीर्घयोरिति न दोष इति वाच्यम्। इन्द्रप्रयजन्तात्प्रापते क्विपि निष्पन्ने सखी, पतिरित्यत्र घित्वाभावाय तयोश्चारितार्थ्यात्। न च 'शेषो' इत्यारम्भसामर्थ्याद्ध्रस्वयोरेव तत्स्यादिति वाच्यम्। अनेकप्रकल्पनाऽपेक्षया ह्रस्वग्रहणकरणस्यैव लघीयस्त्वादिति भावः॥

—ननु 'इति ह्रस्वश्चे'त्यतोऽनुवृत्तेन ह्रस्वग्रहणेनैव समीहितरूपोपपत्तौ प्रकृतसूत्रे यूग्रहणमनावश्यकमेवेत्यत आह—यु किम्। मात्र इति। अयम्भावः, यूग्रहणाभावे उक्तप्रयोगे घित्वात् गुणापत्त्या नेष्टरूपसिद्धिरिति तत्र घित्वाभावार्थमारभ्यते तत्। न च 'ऋतो ङि' न्यारम्भसामर्थ्यादृदन्तेभ्यो गुणश्चेद्धातवेवेति नियमाश्रयणात् प्रकृते दोषाभावेन परिच्छेत्तृवाचिमातृशब्दस्य तृतीयैकवचने घित्वे नात्वापत्त्या मात्रेत्येव प्रत्युदाहरणं युक्तमिति वाच्यम्। उक्तगुणविधायकशास्त्रस्य यूग्रहणाऽपेक्षत्वेनैव तात्पर्यग्राहकत्वादित्यलमतिविस्तरेण॥

दीर्घात्किम्। निष्कौशाम्बिः, अतिखट्व इति। अस्यायमर्थः, कौशाम्ब्या निष्क्रान्तः, खट्वामतिक्रान्त इति विग्रहे पूर्वत्र (निरादयः क्रान्ताद्यर्थे पञ्चम्या) इत्यनेन परत्र च (अत्यादयः क्रान्ताद्यर्थे द्वितीयया) इत्यनेन समासे 'गोस्त्रियोरि'ति ह्रस्वे उक्तप्रयोगद्वयसिद्धिः। अत्र दीर्घादित्यस्याग्रहणे स्थानिवत्त्वेन ङ्याबन्त

त्वात्तत: परस्य सोर्लोपापत्तिः। न च समस्तस्य ङ्याबन्तत्वाभावेन न तत्र दोष। न च स्त्रीप्रत्यये न तदादिनियम इति वाच्यम्। अनुपसर्जने तदभावेऽप्युपसर्जने तत्सत्त्वे बाधकाभावात्। अन्यथाऽतिकारीषगन्ध्यापुत्र इत्यत्र ष्यङन्तपूर्वपदलक्षणसम्प्रसारणापत्तेर्दुर्वारत्वादिति वाच्यम्। उत्तरपदस्य ङ्याबन्तत्वेन सोस्तत्परत्वेन दीर्घग्रहणाऽभावे सुलोपस्य दुर्निवारत्वात्। न च ङ्याब्ग्रहणस्य विहितविशेषणत्वाभ्युपगमे न तत्रोक्तापत्तिलेशोऽपीति वाच्यम्। तस्य विहितविशेषणत्वानङ्गीकारेण दोषस्य तादवस्थ्यात्। न च ङ्याब्ग्रहणस्य परविशेषणत्वे आत्मनो गङ्गामिच्छति गङ्गीयति ततः क्विपि, अलोपे यलोपे च गङ्गीरित्यत्रेकारे स्थानिवद्भावादाबन्तत्वेन दीर्घत्वस्य स्वाश्रयत्वेन च सुलोपापत्ति, न चाल्लोपस्य स्थानिवत्त्वेन सोराप परत्वाभावान्न दोष इति वाच्यम् (क्वौ लुप्त न स्थानिवदि)ति स्थानित्वनिषेधादिति वाच्यम्। ङी ई आ आनिनि प्रश्लेषेण दीर्घग्रहणस्य प्रत्याख्यातत्वादिहाऽऽरूपस्याऽऽपोऽभावेनोक्तापत्तेरयोगादिति दिक्॥

ननु 'हल्ङ्यादि'ति सूत्रे पूर्वहल्ग्रहणाभावेऽपि दीर्घीभूतान्ङ्याबन्तात्परस्य सोर्लोप इत्यर्थेनैव सकलेष्टसिद्धि, न च तदभावे लिट् धुगित्यादौ सुलोपानापत्तिरिति वाच्यम्। तत्र 'संयोगान्तस्य लोप' इत्यनेनैव तदुपपत्ते पूर्वत्र व्यर्थमेव तद्ग्रहणमित्याशयेनाशङ्कते—प्रथमहल् किमिति। समाधत्ते—राजेति। अयम्भाव, अत्र संयोगान्तलोपस्याऽसिद्धत्वेन नलोपानापत्तावुक्तरूपाऽसिद्धिरिति तद्ग्रहणमावश्यक तस्मिन् सति प्रकृतसूत्रेण सुलोपेऽस्य नलोपदृष्ट्याऽसिद्धत्वाऽभावेन नलोपे रूपसिद्धिरिति। न च 'न ङिसम्बुद्ध्योरि'ति सूत्रस्थसम्बुद्धिग्रहणेन नलोपे कर्त्तव्ये संयोगान्तलोपस्याऽसिद्धत्वाभावज्ञापनान्न दोष, अन्यथा सम्बुद्धौ हे राजन्नित्यत्राप्युक्तलोपस्यासिद्धत्वेन नलोपाऽप्राप्त्या तदर्थं कृतस्य सम्बुद्धिग्रहणस्य स्पष्टमेव वैयर्थ्यमिति वाच्यम्। क्लीबे हे ब्रह्मन्नित्यत्र 'स्वमोर्नपुंसकादि'ति सुलुकि तद्दृष्ट्या नलोपस्य सिद्धत्वेन प्राप्तनलोपव्यावृत्त्यर्थं सम्बुद्धिग्रहणस्याऽऽवश्यकत्वेन सार्थक्यात्। न च (सम्बुद्धौ नपुंसकानां नलोपो वा वाच्य) इतिवार्तिकेनैवोक्तप्रयोगसिद्धौ सम्बुद्धिग्रहणमयुक्तमेव ज्ञापकत्वमिति वाच्यम्, तथा सति गोमानित्यत्रापि नलोपापत्ते। न च ज्ञापकसाजात्यादुक्तज्ञापनस्य सम्बुद्धिविषयक

रपाभ्युपगमेन नियमात्ऽमान्तत्वात्संयोगान्तलोपस्याऽसिद्धत्वाऽभावाऽभावेन नोत्तलोपस्य सम्भव इति वाच्यम्। तदंशाऽनुरोधेन सामान्याऽपेक्षस्य ज्ञापनस्य सम्भवे विशेषापेक्षस्य तस्य त्याज्यत्वात् एवञ्च सामान्याऽपेक्षनियमेन न राजस्व-नलोपाऽनुपपत्तिः, न चैवं सामान्यनियमाऽपि नलोपो दुर्वार एवेति वाच्यम्। ज्ञापकमात्रात्यन यत्र-नकारविभक्त्योरानन्तर्यं तद्विषयकोऽयन्नियम इत्यभ्युपगमेन प्रकृते तकारव्यवधानान्नकारविभक्त्योरानन्तर्याऽभावेनाऽदोषात्। एवञ्च पुनर्व्यर्थमेव हल्ग्रहणमिति चेदुच्यते तदभावेऽभिनोऽत्रेत्यत्र संयोगान्तलोपस्याऽसिद्धत्वेन 'सिपि धातो'रिति रुत्वापत्तिः, सति तु तस्मिन्नेन लोपेऽस्य रुत्वदृष्ट्या सिद्धत्वान्न तदनुपपत्तिः, न च रोरुत्वे कर्तव्ये न संयोगान्तलोपोऽसिद्ध इत्यर्थकेन ( संयोगान्तलोपो रोरुत्वे ) इति वार्तिकेनैवाऽभिनोऽत्रेत्यत्र संयोगान्तलोपस्याऽसिद्धत्वाभावेन दोषाऽभावाद् व्यर्थन्तदिति वाच्यम्। अविभर्भवान्, अजागर्भवानित्यत्र नलोपाऽनुपपत्तिवारणाय तदावश्यकत्वात्। तस्मादाऽऽवश्यकं हल्ग्रहणम्। तदुक्तम्। संयोगान्तस्य लोपे हि नलोपाऽऽदिर्न सिद्ध्यति। रात्तु तेनैव लोपः स्याद्धलस्तस्माद्विधीयते इति न च 'रात्सस्ये'ति सूत्रे तकारस्याऽपि प्रश्लेषेण तत्र लोपोपपत्तावकिञ्चित्करमेव तद्ग्रहणमिति वाच्यम्। प्रश्लेषे प्रमाणाऽभावेन तदुपपत्त्यर्थं तस्य सार्थक्यात्। प्रश्लेषाऽभ्युपगमे अवर्त्तदित्यत्र तलोपापत्तेश्चेति दिक्॥

ननु शोभनः सखेति विग्रहे 'राजाहःसखिभ्य' इति टचि सुसख इत्यत्र रूपस्य लक्षणसम्मतत्वे सुसखेति रूपोल्लेखस्य कथं सङ्गतिरिति चेन्नैवम्। न पूजनादिति निषेधेन टचोऽप्रवृत्तेरित्यत आह— शोभनः सखा सुसखेति। एवमतिशयितः सखाऽतिसखेत्यत्रापि टचोऽप्रवृत्तिरिति बोध्यम्॥

ननु 'अनङ् सौ' इत्यादौ सखिशब्दस्य ग्रहणात्तस्यैवाऽनङादि कार्यं स्यान्न तु सुसखिशब्दस्य तत्र तस्याऽग्रहणादित्याशङ्क्य समाधत्ते—अङ्गत्वात्तदन्तस्याऽप्यनङिति। अनङादिकार्यस्याऽङ्गाधिकारीयत्वेनाऽङ्गस्येत्यधिकारेण तं प्रति सखिशब्दस्य विशेषणत्वात् 'येन विधिस्तदन्तस्ये'ति तदन्तविधौ सखिशब्दान्तस्यानङित्यर्थे सुसखिशब्देऽप्यनङादिकार्यस्य सौलभ्यमेवेति भावः। अत एव सखि

शब्दस्यैवाऽनङादिकार्यं न स्यात्केवलस्य तस्य सखिशब्दान्तत्वाऽभावादिति वाच्यम् । केवले तस्मिन् व्यपदेशिवद्भावेन तत्तत्कार्य्यप्रवृत्तेरित्यलम् ॥

ननु—'शेषोऽघ्यसखी'ति सूत्रेऽसमर्थसमासादिदोषभिया प्रसज्यप्रतिषेधायस्य नञोऽग्रहणेन पर्य्युदासस्य ग्रहणात्तस्य च सदृशग्राहित्वेन सखिसादृश्यञ्च समुदायस्य नास्तीत्यभिप्रायेणाऽऽचष्टे—समुदायस्य सखिरूपत्वाभावादित्यादि । एतस्या इत्थमाशय वर्णयति नागेश, तथा हि असखीत्यस्य सखिभिन्नावयवयोरिदुतावित्यमिति वर्णसंज्ञापदार्थ, सखिभिन्नावयवो याविकारोकारौ तदन्तयो घित्वमिति तदन्तसंज्ञापक्षे चार्थ । तथा च समुदायस्य सुसखीत्यस्य सखिभिन्नत्वात्सुलभैव घिसंज्ञा । भाष्यकृन्मते तु प्रकृते घिसंज्ञा नैव लभ्यते सखिशब्दस्य तदवयवे लक्षणया सख्यवयवभिन्नयोरिदुतोस्तदन्तयोर्वा घित्वमित्यर्थ सुसखिघटकेकारस्य सख्यवयवत्वेन तद्भिन्नत्वाभावात्सूत्राऽप्रवृत्तेरिति दिक् ॥

ननु परमश्चासौ सखा चेति विग्रहे पूजार्थस्याऽगम्यमानत्वेन न पूजनादिति निषेधाप्रवृत्त्या 'राजाहःसखिभ्य' इति टच् दुर्वार इत्याशङ्क्य समाधत्ते-परमः सखा यस्येति विग्रह इति । तत्पुरुषे टच प्रवृत्तिरयन्तु बहुव्रीहिरिति नोक्तापत्तिलेश इति भाव ॥

ननु परमः सखा यस्येति बहुव्रीहौ प्राचीनमतसिद्धस्यैतत्पदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपगौणत्वस्य सत्त्वात् (१)(गौणमुख्य) न्यायप्रवृत्त्या कथमनङादिकार्य्यप्रवृत्तिरिति सन्देहस्य प्रादुर्भावे तन्निवारयति-गौणत्वेऽपीति । यथा गौणेऽपि परमाऽस्थ्यादिशब्दे भवत्यनङादिस्तद्वदिहापीति भाव । न च शब्ददलीयोक्त्या यस्य बाधकरूपस्य सत्त्वादनङादिकार्य्यं न स्यादिति वाच्यम् प्रकृते वक्ष्यमाणगौणत्वाभावादुक्तन्यायाप्रवृत्ते । अप्रसिद्धस्य गौणलाक्षणिक

(१) गौणमुख्येति । गौणमुख्ययोर्मुख्ये कार्य्यसम्प्रत्यय इति तत्त्वम्, गौणमुख्ययोरर्थयोर्मध्ये मुख्य एवार्थ कार्य्यसम्प्रत्यय, मुख्यार्थे बोधक एव शब्दे कार्य्यप्रवृत्तिरित्यर्थं । अर्थवद्ग्रहणपरिभाषाया
प्रवृत्त्या तदक्रमेणास्या अपि तत्रैव प्रवृत्तिरुचितेत्येव बीजम् ।

स्तदाश्रयत्र सति च तस्मिन्न नत्प्राप्तिरिति न कश्चिद्दोषः। ननु त्यदादित प्रागेव भवच्छब्दस्य पाठकरणान्न प्रागुपदर्शितलक्ष्यसिद्धिरित्यत आह—भवन्ताविति। त्यदादित पूर्वं भवच्छब्दस्य पाठे (त्यदादीना मिथ सहोक्तौ यत्परं तच्छिष्यते) इत्यनेन भवच्छब्दस्य शेषापत्तिरतो यथोक्तपाठ एव समादरणीय, तथा सति पूर्वप्रदर्शितदोषापत्तिर्दुर्वारा चेति द्विपर्य्यं तग्रहण कर्त्तव्यमेवेति दिक् ॥

ननु बहुश्रेयसीशब्दात् टौ तस्याऽऽमि बहुश्रेयसा आमिति स्थिते 'ह्रस्वनद्यापो नुडि'ति नुडापत्तिर्दुर्वारेति शङ्का समाधत्ते—इह परत्वादिति। आट्नुटो प्राप्तयो परत्वादाटा नुटो बाधेन न नुट्। नन्वाऽऽटानुटो बाधेऽपि बाधके प्रवृत्ते बाध्यस्य नुट प्राप्त्या स स्यादिति वाच्यम्। (१)(सकृद्गति)न्यायेन बाधे पुनर्बाध्याप्रवृत्ते। नन्वाऽपवादात् नुगदीर्घत्वस्येति 'दीर्घोऽकित इति सूत्रस्थभाष्यादागमाऽऽदेशयारपि बाध्यबाधकभावाऽभ्युपगमेन निरवकाशेनाऽऽमाऽऽटो बाधे पुनराटोऽप्राप्त्या नुटा सहाऽऽट विप्रतिषेधविचारासङ्गतिः सर्वथैवेति वाच्यम्। निरवकाशरूपापवादशास्त्रप्रवृत्त्युत्तरमुत्सर्गशास्त्रप्रवृत्तौ बाधकाऽभावेनोक्तदोषाऽनवकाशादिति भाव ॥

ननु 'लक्षमुँट् च' इत्यौणादिके ई प्रत्यये लक्ष्मीशब्दस्य निष्पन्नत्वान्न 'हल्ङ्याब्भ्यो' इत्यस्याऽप्राप्तिरित्याशयेनाह—अङ्यन्तत्वान्न सुलोपः, अतिलक्ष्मीरिति। (कृदिकारादक्तिन) इति टीकि तु सुलोप इष्ट एव, अत एव, लक्ष्मी लक्ष्मीर्हरिप्रियेत्युपपन्नमित्यलम् ॥

कुमारीति। नन्वत्र यचोऽकारस्य स्थानिवद्भावादच्परत्वेन यणापत्तिर्दुर्वारा, न च पदान्तविधौ तन्निषेध इति वाच्यम्। 'नक्ये' इत्यनेन नान्तस्यैव पदत्वविधानादिहातथात्वेन निषेधाऽप्रवृत्ते। न च (क्वौ लुप्तं न स्थानिवद्) इत्यनेन स्थानिवत्त्वनिषेधान्न

(१) सकृद्गतीति। सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति तत्स्वरूपम्। विप्रतिषेधे सति सकृत् यद्बाधितं सत् गतौ प्राप्तौ सत्यामपि बाधितमेव न प्रवर्तत इत्यर्थ। उभयरूपेण पूर्वशास्त्रे सङ्कोच इति यावत्। तत्र कश्चित्तार्थयोरेकस्मिन्युगपदुभयो कार्ययोरसम्भवेन बाधकाभावापर्यायेण चाप्राप्तवृत्तप्रसङ्गे नियमार्थं विप्रतिषेधसूत्रमिति सकृद्गतिन्यायसिद्धि ।

नचाऽल्लोपस्य स्थानिवत्त्वादच्परत्वेन 'एरनेकाच' इति यणादेशो दुर्वार, नचाऽन्तर्वर्तिन्या विभक्त्या सखिशब्दस्य पदत्वेन 'न पदान्ते'ति सूत्रेण पदान्तविधौ यणि कर्त्तव्ये स्थानिवत्त्वनिषेधान्नो नापत्तिलेशोऽपीति वाच्यम् । 'न ङ्यं' इति नियमेन यण्चि नान्त स्यैव पदत्वादिहोन निषेधाऽप्रवृत्त्या स्थानिवत्त्वस्य दुर्वारतयोक्तापत्ते स्ताद्वस्थ्यात् परपदस्थाऽजादेशस्येन तेन स्थानिवत्त्वनिषेधाच्च । न चाऽन्तरङ्गपरिभाषयाऽन्तरङ्ग यणि कर्त्तव्ये द्वियपेक्षत्वेन बहिरङ्ग यसम्बन्धियलोपस्याऽसिद्धत्वेन स्थानिवत्त्वनिषेधमन्तराऽप्युक्तदोषो न स्यादिति वाच्यम् । उक्तपरिभाषाया अनित्यत्वेन दोषस्य दुरुद्धर त्वादित्यत आह—क्वौ लुप्तं न स्थानिवदिति । लुप्तमिति 'नपुसके भावे क्त'लोप इत्यर्थ । गोमत्यते क्विपि गोमानितिभाष्योक्तेरेतदपि क्वचित्स्वीकर्त्तव्यम् । सार्वत्रिकन्तु क्वौ विधिं प्रति न स्थानिवदित्ये वेति दिक् ॥

ननु 'ऋत्यादि'ति सूत्रे प्रयोगस्थस्य विवृतस्याऽनुकरणेनाऽवि शेषाद्ध्रस्वदीर्घयोरुभयोर्ग्रहणमित्याशयेनाह— दीर्घस्यापि ग्रहणो- ऽत्यत्यादित्युक्तमिति ।

लुनिरित्यादे 'ल्वादिभ्यश्च' 'पचा व' 'शुप क' 'प्रस्त्योऽन्य तरस्यामि'त्येतै सूत्रैर्विहितेषु नत्ववत्वकत्वमत्वेषु तत यण्चि 'अल्लोपे यलोपे च सिद्धि ॥

ननु व्युत्पत्तिपक्षे तृन्नन्तत्वात्तजन्तत्वाद्वा दीर्घे सिद्धे नप्त्रादिग्र हण व्यर्थमित्यत आह-सूत्रे नप्त्रादिग्रहण नियमार्थमिति । तथा चाय नियम , उणादिनिष्पन्नाना तृतृच्प्रत्ययान्ताना सञ्ज्ञाशब्दाना दीर्घ श्चेन्नप्त्रादीनामेवेति, तेनाऽन्येषामुणादिनिष्पन्नाना सञ्ज्ञाशब्दाना पितृमातृप्रभृतीना नेति, नेष्ट्रादीनामप्युणादिनिष्पन्नत्वादिरूपहेतो सत्त्वेन दीर्घसिद्धि । अव्युत्पत्तिपक्षेतु नप्त्रादिग्रहणस्य विध्यर्थत्व मेव, अत्र पक्षे पितृमातृप्रभृतीनामत्र सूत्रे पाठाऽभावादेव दीर्घशङ्का निरास । ननु उद्गातृशब्दस्यौणादिकतृप्रत्ययान्तत्वेऽपि नियमेन व्यावृत्त्या दीर्घो न स्यादित्याशङ्क्य समाधत्ते—भाष्यप्रयोगादिति । उद्गातार इति समर्थसूत्रस्थभाष्यप्रयोगादित्यर्थ , एवञ्चोद्गातृशब्द स्यौणादिषु निष्पत्तिरप्रामाणिकेति भाव । केचित्तु उद्गातृशब्दस्यौ णादिकत्वमङ्गीकृत्य भाष्यप्रयोगबलेनैव दीर्घमभिलष्यन्तीति तन्न

भाष्यकृताऽप्रयोगस्योदाहरणेन शोऽप्यस्य भाष्यप्रयोगत्वा भावादिति दिक् ॥

ननु क्रोष्टु आमिति स्थितौ नुट्तृज्वद्भावयोः प्राप्तयोः 'विप्रतिषेधे परं कार्यम्' इति सूत्रबलेन तृज्वत् स्यात्। न च तृजपेक्षया नुटो नित्यत्वादेव स्यादिति वाच्यम्। कृते तृज्वद्भावे (सन्निपात) परिभाषया नुटोऽप्राप्त्या तस्य नित्यत्वाऽभावात्। एवञ्च परत्वात् नित्यत्वाच्चिकीर्षिते बाधके गाऽऽपद्यते–परत्वात्तृज्वद्भावे प्राप्त इति। समाधत्ते—(नुमचिरेति) नुमचिरतृज्वद्भावाभ्यां बाधित्वा पूर्वविप्रतिषेधेन नुडेव भवतीति तदर्थः। नुटा नुमाद्बाधस्य फलानि वारीणाम्, त्रिपुणाम्, क्रोष्टूनामित्यादौ नुमभावतृज्वद्भावाऽभावरूपाणि बोध्यानि। न च 'अचि र ऋतः' इत्यस्यापवादत्वेन बाध्यसामान्यचिन्ताऽऽश्रयणे स्वविषये प्राप्तस्य सर्वस्याऽपि बाधकत्वम् अत एव गुणदीर्घोत्वानामपवाद इति भगवद्वृत्त। एवञ्च विरोधाऽपदेशेन नुटोऽपि बाधादुत्सर्गाऽपवादयोरसमानबलत्वेन विप्रतिषेधविचाराऽसङ्गत इति वाच्यम्। पाटशे 'न तिसृ' इति ज्ञापकबलेन नुट् नतु विप्रतिषेधेनेति तृज्वत्सूत्रे भाष्योक्तेः। एवं तर्हि नुम्तृज्वद्भ्यामित्येव सुवचमिति भावः॥

ननु दीर्घऋकारात्तरपरकारान्तयोः प्रायः प्रयोगाऽभावादनुकरणशब्दं निरूपयति—कृ ॠ इत्यनयोरनुकरणे लिति। 'यत्तदेतेभ्यः परिमाणे' इतिसूत्रे एतेभ्य इत्यत्र त्यदाद्यनुकरणादनुकरणस्य प्रकृतिवत्त्वमित्येतत्सिद्धमाह—प्रकृतिवदनुकरणमिति। अनुकरणस्य शब्दमात्राधारत्वे तात्पर्यविषयत्वादनुकार्यशब्दस्वरूपमात्रबोधकत्वम्। प्रकृत्याऽनुकार्येण तुल्यं वर्तते इति तदर्थः। तत्रैवैकशेषाऽदर्शनात्तिदाय इत्यादौ धात्वनुकरणे विभक्तिकरणाच्च वैकल्पिकत्वमित्यत आह—वैकल्पिकाऽतिदेशादिति। (१) अनुकरणस्याऽनुकार्येण

(१) अनुकरणस्येति। अनुकार्यानुकरणयोर्भेदेऽनुकरणेन बोधाय गत्यस्वीकर्त्तव्यत्वादभिन्नतरूपार्थवत्त्वेनैव सर्वमुपपद्यते। अत एव भुवो वुगिस्यादि सङ्गति। तयोरभेदे तु, अनुकार्यनिरूपितशक्त्याऽनुकरणेनाऽपि बोधो भवतीत्यनुकरणस्य शक्तिमत्त्वरूपार्थवत्त्वाऽभावेनाऽप्रातिपदिकत्वाच्च विभक्त्युत्पत्तिः, अत एव, भूसत्तायामित्यादि सङ्गतमिति तद्भावः॥

न्द्ररूपार्थेनार्थवत्त्वात्प्रातिपदिकत्वेन ततः सुबुत्पत्तिः सुलभा। नन्वेवं 'भू सत्तायामि'त्यादावपि विभक्त्यापत्तिरिति वाच्यम्। एतन्निर्देशादेव क्वचिदनुकरणाद्विभक्त्यनुत्पत्तेरपि स्वीकारात्। 'झला जश् झशी'त्यादौ जश्त्वाभावषड्गवित्वयमाहत्यत्र वान्तस्यैवानुकरणादनुकार्य्यस्वरूपस्याविवृतत्वाय न वलोप इत्यलम्॥

ननु इना सह वर्त्तते इति विग्रहे 'तेन सहेति तुल्ययोग' इति बहुव्रीहौ 'वोपसर्जनस्ये'त्यनेन सहस्य सभावे 'आद्गुण' इति गुणे स इति सिद्ध्यति 'अनेकादेशस्य पूर्वान्तवत्त्वादव्ययत्वेन सुपो लुक् दुर्वार इति चेन्न। अव्ययमिति महासंज्ञया अन्वर्थत्वादुपसर्जनेऽव्ययत्वाऽभावेनाऽदोषात्। न चैवमपि सह इ इति स्थितावन्तरङ्गत्वाद्गुणे एकादेशस्य परादिवद्भावे सहशब्दाभावात्पूर्वान्तवद्भावे तु सहशब्दस्योत्तरपदत्वाऽभावादुभयत आश्रयणेऽन्तादिवद्भावस्याऽनिष्टत्वाच्च सहशब्दस्य सादेश एव न स्यात्किञ्च सादेशात्प्रागन्तरङ्गत्वाद्गुणे ततः सादेशेऽदन्तत्वस्यैव सम्भवादेकारान्तत्वाऽभावेन नोक्तापत्तिलेशोऽपीति वाच्यम्। 'नेन्द्रस्य परस्ये'त्युत्तरपदवृद्धिप्रतिषेधेन प्राक् पूर्वोत्तरपदनिमित्तकं कार्य्यं ततः एकादेश इति सामान्यापेक्षज्ञापनादेकादेशात्प्राक् सादेशे तदुत्तरमेकादेशे पूर्वप्रदर्शिताऽऽपत्तेस्तादवस्थ्यात्। एवञ्च प्रागुक्तसमाधानेनैव दोषव्यावृत्तिरित्यनयम्॥

ननु से शब्दाज्जसि से असिति स्थितावेकारस्य पूर्वान्तवद्भावेन पदान्तत्वादयादेशं बाधित्वा 'एङ पदान्तादति' इति पूर्वरूपाऽऽपत्तिरिति चेन्न। अस्य 'थास से' इश से' अत्रत्य सेशब्दाऽनुकरणत्वात्सेकारस्य पदान्तत्वाऽभावेनोक्तापत्तेरभावादिति भावः॥

ननु ओकारान्तात्तद्धितस्य शसोऽसम्भवात्सुप एव तस्य सम्भव इत्याशयेनाह—शसा (१)साहचर्य्यादिति। केयस्तु तद्धितस्यापि शसः सत्वात्तेनाऽपि साहचर्य्यग्रहणस्य कर्त्तुं शक्यत्वेन शसा साहचर्य्यादिह सुप एव ग्रहणे किं विनिगमकमिति सन्दिह्याऽचीत्यधिकाराददादिशसः सुप एव सम्भवो नतु तद्धितस्येति तदाशयमभिहितवान्, तेन, अचिनवम्, असुनवमित्यादावपि नात्वापत्तिर्दोषः॥

(१) साहचर्यादिति। सहचरितासहचरितयोर्मध्ये सहचरितस्यैव ग्रहणमिति परिभाषयेत्यर्थः।

ऽऽश्रयणे तस्य (१) (मध्येऽपवादाः) इति न्यायेन दीर्घोत्वयोरेवाऽपवादत्वं स्यान्न तु गुणस्येति नास्येहाऽऽश्रयणम्, अस्य च पदद्वयस्य आनिस्थानिपदद्वयघटितानुरोधादयमस्याः ।" न च रादेशस्य प्रियतिस्रे यादौ सावकाशत्वादपवादत्वं कथमिति वाच्यम्। यणा गतार्थत्वात्। एतच्च रादेशेन तिस्रस्तिष्ठन्तीत्यत्र 'जसि चे'ति गुणस्य तिस्रः पश्य न्त्यत्र 'प्रथमयोरि'ति पूर्वसवर्णदीर्घस्य प्रियतिस्र स्वमित्यत्र 'ऋत उत्' इत्युत्वस्य बाध इत्यलम् ॥

उक्त-स्त्रियामित्यस्य सामीप्याद्गतिचतुरोरेव विशेषणत्वसम्भव स्तथाऽङ्गविशेषणत्वे स्त्रिया वर्तमान यत्त्रिशब्दात् चतुःशब्दात् अङ्ग तदवयवयोर्निर्दिश्यमानयो त्रिचतुःशब्दयोस्तिसृचतस्रादेशः इत्यर्थे प्रियास्त्रयस्त्राणि वा यस्येति विग्रहे प्रियत्रिरित्यत्र त्रिशब्दा न्ताङ्गस्य स्त्रिया वर्तमानत्वेन तिस्रादेशापत्तिः, त्रिचतुरोर्विशेषणत्वे तूक्तविग्रहे तयोः स्त्रिया वर्तमानत्वाभावान्नोक्तापत्तिः। प्रमाणञ्चात्र (श्रुतानुमितयोः श्रुतसम्बन्धो बलवान्)इति न्याय एवेत्याशयेनाह—स्त्रियामित्यस्य त्रिचतुरोर्विशेषणत्वान्नेहेति ॥

ननु प्रियास्तिस्रो यस्य तत्कुलमिति विग्रहे त्रिशब्दस्य स्त्रिया विद्यमानत्वेन तिस्रादेशे प्रियतिसॄति रूपञ्च स्यादित्यत आह—स्वमोर्लुका लुप्तत्वेनेति। अयम्भावः, प्रियत्रिशब्दात्परस्य सो 'स्वमोर्नपुंसका'दिति लुकि तस्य 'न लुमताऽङ्गस्ये'ति निषेधात्प्रत्ययलक्षणाऽभावेन विभक्तिपरत्वाऽभावाच्च तिस्रादेश इति, उक्तनिषेधसूत्रस्याऽनित्यत्वे तु प्रत्ययलक्षणेन विभक्तिपरत्वात्तिस्रादेशे प्रियतिसृ इति रूप ममनत्येव एतदनित्यत्वे प्रमाणं तु 'इकोऽचि विभक्ता'वित्यत्राऽचिग्रहणमेव, तथा हि, अजादिभिन्नविभक्तिपरतो नुमोऽभावाय सूत्रे तद्ग्रहणं परञ्च भ्याम्भ्यसादिषु सत्यपि नुमि नलोपः 'प्रातिपदिकान्तस्ये'ति नलोपे विकृतरूपाऽभावाद्व्यर्थमचिग्रहणं ज्ञापयति न लुमताऽङ्गस्येति सूत्रमनित्यमिति। न च 'न ङिसम्बुद्ध्योरि'ति निषेधेन

(१) मध्येऽपवादा इति। मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान् इति तत्स्वरूपम्। मध्यवर्तिनोऽपवादाः पूर्वोपस्थितान् विधीनेव बाधन्ते न तु पश्चादुपस्थितान् विधीनित्यर्थः। पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यमस्याः बीजम्।

सम्बुद्धौ नलोपाऽसम्भवात्तत्र नुमापत्तिव्यावृत्त्यर्थमचीत्यस्याऽऽवश्यकत्वमिति वाच्यम् सम्बुद्धेर्लुका लुप्तत्वेन विभक्तिपरत्वाऽभावादेव तत्र नुमोऽप्रवृत्तेः । न च तथाऽपि प्रत्ययलक्षणेन विभक्तिपरत्वसम्भवात्प्राप्तनुम्व्यावृत्त्यर्थं तदावश्यकमिति वाच्यम् । न लुमताऽङ्गस्येत्यस्याऽनित्यत्वं विना प्रत्ययलक्षणाऽप्रवृत्तेः । नचोत्तरार्थत्वेन ज्ञापकत्वमस्य न स्यादिति वाच्यम् । तथा सति लाघवात्तस्यैव कर्तव्ये इह करणे वैयर्थ्यस्य स्पष्टत्वेन ज्ञापकत्वस्य युक्तत्वात् । एवञ्चाप्योक्तनिषेधशास्त्रस्याऽनित्यत्वज्ञापनात्सम्बुद्धौ नुम्व्यावृत्त्यर्थमावश्यकत्वेन स्वांशे चारितार्थ्यमिति भावः । न चाऽनित्यत्वस्य सम्बुद्धिगुणमात्रविषयकत्वे कथं प्रकृते निर्वाह इति वाच्यम् । लक्ष्याऽनुरोधात्क्वचिदन्यत्रापि तदभ्युपगमेनेष्टसिद्धेः । अत एव वैयटेनाऽपि मूलोक्तरूपद्वयमङ्गीकृतमिति दिक् ॥

रादेशात्पूर्वविप्रतिषेधेन नुमिति । प्रियतिसृणी प्रियतिसृणीत्याद्युदाहरणमेवाऽत्र प्रमाणम् । अथवा 'न तिसृचतसृ'इति ज्ञापकात्सामान्यतो नाऽऽगमविषये रादेशप्रवृत्तिः, अत एव प्रियतिसृणामित्यत्र नुट्, अन्यथा रादेशे ह्रस्वान्तत्वाऽभावात्स न स्यादितिभावः ॥

ननु द्विशब्दाद्विभक्तिसमभिव्याहारे द्वि औ इति स्थितौ 'त्यदादीनाम' इत्यत्वे टापि 'औङ आपः' इति श्यादेशे गुणे द्वे इति सिद्ध्यति, अत्र (सन्निपात) परिभाषया विभक्तिसन्निपातेन जायमानस्याऽत्वस्य टाब्द्वारा विभक्तिविघाते निमित्तत्वाऽभावेन टापोऽप्रवृत्त्या नेष्टरूपस्य सिद्धिरिति चेन्न । 'न यासयोरि'ति निर्देशेनोक्तपरिभाषाया अप्रवृत्तेः । न चाऽन्तरङ्गपरिभाषयाऽन्तरङ्गटाब्दृष्ट्या बहिरङ्गाऽसिद्धत्वाट्टाप् न स्यादिति वाच्यम् । अस्या अयुक्तनिर्देशेनैवाऽनित्यत्वात् । न च (अङ्गवृत्त) परिभाषया टाब् नेति वाच्यम् । 'द्वयोरेकस्य निर्धारणे' इत्यत्रैतन्निर्देशेन तदनित्यत्वेनाप्रवृत्तेः । एवञ्च बाधकाऽभावादुक्तरीत्या रूपसिद्धिरित्याशयेनाह-द्वेरत्वे सत्याविति ।

विभक्तौ लिङ्गविशिष्टाऽग्रहणमिति । विभक्तिनिमित्तके कार्ये कर्तव्ये लिङ्गबोधकप्रत्ययविशिष्टस्य ग्रहणं नेति तदर्थः । अत्र घटघटाग्रहणेन लिङ्गविशिष्टपरिभाषाऽनित्यत्वमेव मूलमिति भावः ॥

ननु इस्वनाद्यस्येऽप्यस्त्रीत्यस्य सम्बन्धाद्विशब्दावयवभिन्नह्रस्वे पुंल्लिङ्गे नद्यामभ्येत्यर्थे कथमनिष्टे इत्यत्र नदीसंज्ञाभावस्तिरिया

शये ऽाह—अस्त्रीति लिति । अत्र हेतुमाह—तत्सम्बद्धस्यैवाऽनुवृत्ते-रिति । इयङुवङ्स्थानिसम्बद्धस्यैवाऽनुवृत्तेरित्यर्थः । अस्त्रीत्यत्र न प्रसज्यप्रतिषेधो वाक्यभेदापत्तेः नतु इयङुवङ्स्थानावित्यनेनाऽपि ह्रस्वस्य निषेधः कुतो नेत्याशङ्क्य समाधत्ते—दीर्घस्यैवाऽस्य निषेधो न तु ह्रस्वस्येति । तत्र ह्रस्वपदाऽभावादिति भावः ॥

प्रधीशब्दस्येति। वृत्तिकारादीनाम्मते प्रधाशब्दस्य नदीसञ्ज्ञाविधौ पदान्तर-विनाऽपि स्त्रिया-वृत्तिमात्रस्य नित्यस्त्रीत्वम्। अत एव आध्यै प्रध्यै ब्राह्मण्यै इति (१) भाष्य सङ्गच्छते। अन्यथा कैयटोक्तनित्यस्त्रीत्वाभावात्तदसङ्गतं स्यात्। अत "स्त्रीविषयावेय यौ यू नित्यमिति भाष्ये एवकारो भिन्नक्रम नित्यमेवेत्यस्य पदान्तरं विनाऽपीत्यर्थः। उक्तभाष्यप्रयोगे न बहुव्रीहि कयापत्तेः, किन्तु आध्यायति प्रकृष्टं ध्यायतीति व्युत्पत्तिः, अस्याश्च व्युत्पत्तौ लिङ्गान्तराऽनभिधायकत्वाऽसम्भवेन नित्यस्त्रीत्वाऽभावादुक्तभाष्यप्रयोगाऽनुपपत्तिः, एवञ्चोक्तव्युत्पत्तिकस्य सुधीशब्दस्य सदसीशब्दवदेव रूपम्, वृत्तिकाराद्युक्तनित्यस्त्रीत्वादिति भावः। वस्तुतस्तूक्तभाष्यप्रयोगे बहुव्रीहिरेव वसु न वृत्तेः प्राग् यस्य नदीत्वं तदुत्तरपदकादेव कपो विधानात् आत्साह चर्य्यात्। ततश्च नित्यपदस्य स्वारसिकाऽर्थत्यागेऽतिविप्रकृष्टार्थपरत्वे प्रमाणाऽभावेन लिङ्गान्तराऽनभिधायकत्वं नित्यस्त्रीत्वमित्येव युक्तमिति कैयटमतम्। अस्मिश्च मते नित्यस्त्रीत्वाऽभावेन पुवदेव रूपमित्यलम् ॥

नतु भ्रूशब्दस्योवङ्स्थानित्वेन समुदायस्याऽपि तत्स्थानित्वात् नेयङुवङि'ति निषेधेन नदीत्वाऽप्राप्त्या सम्बोधने ह्रस्वत्वन्न स्यादित्यभिप्रायेणाऽऽशङ्कते—कथं तर्हि, हे सुभ्रु इति। समाधत्ते-प्रमाद एवेति। अनवधानरूप एव प्रमादः। स च काव्ये पुष्टिकरत्वेन गुण एवेति बहवः (२) (नञ्घटितमनित्यमि)ति परिभाषया निषेधशास्त्राऽनित्यत्वबोधनात्रात्र कश्चिद्दोष इति केचित् ॥

(१) भाष्यमिति। आध्यै प्रध्यै ब्राह्मण्यै, इत्यत्र नदीत्वशास्त्रनिषेधमाशङ्क्य यत्र नदीकार्य्याश्रयेऽङ्गे बाधकाऽधिनियङादिस्थितिस्तत्रैव निषेध इति समाधानपरभाष्यमित्यर्थः ॥

ननु 'रषाभ्यां नो णः समानपदे' इत्यतो णकारानुवृत्त्यैव सिद्धौ 'पूर्वपदात्संज्ञायामगः' इत्यत्र णग्रहणं व्यर्थम् । न च 'वा भावकरणयोरि' त्यस्माद्वाग्रहणाऽनुवृत्त्यर्थमस्तु तदिति वाच्यम् । आरम्भसामर्थ्या देव नित्यत्वसिद्धेः । अन्यथा 'प्रातिपदिकान्तनुम्विभक्तिषु चे'त्येव सिद्धौ तस्य स्पष्टमेव वैयर्थ्यं स्यादित्याशङ्क्य समाधत्ते—आरम्भसामर्थ्यादेव नित्यत्वसिद्धौ णग्रहणं स्पष्टार्थमिति ॥

'न तिसृचतसृ' इति नामि दीर्घत्वप्रतिषेधज्ञापकेन ङीषभावापत्तौ स्वस्रादिगणे तिसृचतस्रोः पाठो विफल एवेति 'ऋन्नेभ्यो ङीप्' इत्यत्र कैयटः । इत्यजन्ताः स्त्रीलिङ्गाः ॥

---

## अथाऽजन्तनपुंसकलिङ्गप्रकरणम् ।

ननु 'अतोऽमि' इत्यत्र लाघवाय मित्येव च्छेद इति चेन्न । तथा सति ज्ञानमित्यत्र 'सुपि चे'ति दीर्घापत्तेः । न च (सन्निपात) परिभाषयैव तत्र दीर्घव्यावृत्तिर्द्वितीयैकवचने च 'आदेः परस्ये'ति आदेरादेशेऽन्त्यमकारस्य संयोगान्तलोपे रूपमिष्टं सिद्ध्यत्येवेति वाच्यम् । तथैव हे ज्ञानेत्यादौ सम्बुद्धिलोपाऽनापत्तेः । प्रत्ययलोपेन मकारनिमित्तकप्रकृतिप्रत्ययसन्निपातविघातस्य जायमानत्वात् । परत्र संयोगान्तस्य झल एव लोप इति व्याख्यानेन लोपाऽनापत्तेः । अतो नाऽत्र मिति च्छेदः किन्त्वमित्येव, अमिति छेदस्य सूत्रकाराऽभिप्रायविषयत्वादेव, ज्ञानेत्यादौ मलोपार्थं हेकतरदित्यत्र सम्बुद्ध्यलोपार्थञ्चाङ्गादेप व्यधिकरणान्वयहल्पदानुवृत्तय आस्थिता भाष्ये न तु मिति छेद उक्त इति भाष्यविरुद्धकल्पना नाभ्युपगन्तव्येति दिक् ॥

ननु हे ज्ञान सु इति स्थितौ परत्वात्सम्बुद्धिलोपं बाधित्वा सोरमादेशे 'अमि पूर्वः' इति पूर्वरूपत्वे च जाते सम्बुद्धेर्ह्रस्वाऽन्ताङ्गात्परत्वाऽभावेन लोपो न स्यादिति चेन्न । पूर्वाऽन्तवद्भावेनैकादेशविशिष्टेऽङ्गत्वसत्त्वात् । न चैवमपि पूर्वरूपत्वेनाऽमोऽकारस्याऽपहारात्सम्बुद्धेरङ्गात्परत्वाऽसम्भवेन लोपो न स्यादिति वाच्यम् । अमोऽकारस्याऽपहारेऽप्युक्तरीत्या तद्विशिष्टेऽङ्गत्वसत्त्वादुभयाङ्गात्परो यः सम्बुद्ध्यवयवो हलित्यर्थकरणेन सम्बुद्धेरङ्गात्परत्वाऽभावेऽपि तदवयवस्य हलो मकारस्य तथात्वेन लोपस्य सुलभत्वादित्याशयेनाऽऽह—एङ्ह्रस्वादिति हल्मात्रलोप इति ॥

ति वार्त्तिकेन छन्दोग्रहणाऽनुवृत्त्यावश्यक यादृत्यच्छन्दोग्रहणाऽनुव र्त्तनेनैव पद्दन इत्यत्रापि छन्दसि विधानलाभे तत्र शीर्षश्छन्दसीत्य तोऽनुवृत्त छन्दोग्रहणं व्यर्थं सत्कापयति लोकेऽपि क्वचित्पदाद्यादेशा भवन्तीति ज्ञापनेन सिद्धेरित्याशयेन पंक्तिमिमामवतारयति—पद्न इत्यत्र हि छन्दसीत्यनुवर्तित तथापीत्यादि ॥

– ननु श्रियं याति यत्कुलमिति विग्रहे श्रीपशब्दाद्यनर्थ्येकवचने ङयि ङकारस्येत्व लोपे च 'ङेर्य्' इति यादेशे 'सुपि चे'ति दीर्घे श्रीपायेति सिद्ध्यति । अत्र यकारे पूर्वस्य भत्वात् 'आतो धातो' इत्या कारलोप कुतोनेति चेन । सन्निपातपरिभाषाविरोधात् । तथा हि, अत्रजातीयमुपजीव्य जायमानस्य यादेशस्य भसंज्ञाद्वारा तज्जातीया ऽऽकारविघातनिमित्तत्वं न स्यादुपजीव्यविरोधात् । उपजीव्यविरोधो न न्याय्य इत्युक्तत्वात् । न च रामायेत्यत्र सुपि चेति दीर्घार्थमुक्तपरि भाषाऽनित्यत्वाऽभ्युपगमादिहाऽपि तदप्रवृत्तिरेव स्यादिति वाच्यम् । कष्टायेति निर्देशेन दीर्घ तदप्रवृत्तावपि लोपे तदप्रवृत्तेर्वक्तुमशक्यत्वा दित्यभिप्रायेणाह—अत्र सन्निपातपरिभाषया आतो धातोरित्याका रलोपो नेति ॥

√ ननु वारिशब्दात्सम्बुद्ध्येकवचने सौ तस्य 'एङ्ह्रस्वादि'ति लोपे तस्य प्रत्ययलक्षणेन प्रकृते परत्वात् 'ह्रस्वस्य गुणः' इति प्राप्तगुणस्य न लुमताङ्गस्येति निषेधे हे वारीत्येव न तु हे वारे इति तथा च, हे त्रपो हे त्रपु इति भाष्योदाहरणासङ्गत्यापत्तिर्दुर्वारेति पूर्वपक्षप्रादुर्भावे समा धत्ते—न-लुमतेत्यस्याऽनित्यत्वादिति । अयम्भाव अस्याऽनित्यत्वे इकोऽचि विभक्ताविति स्यत्राऽचिग्रहणमेव ज्ञापकम् तथाहि, हलादौ नुमभावायैव सूत्रे तद्ग्रहणं स च नुमभावस्तद्ग्रहणं विनाऽप्युप पन्न हलादौ सत्यपि नुमि लोपेन तद्व्यावृत्ते । न च सम्बुद्धौ 'न ङिसम्बुद्ध्योरि'ति निषेधेन नलोपाभावात्प्रकारान्तरेणापत्तिवारणार्थ मचीत्यस्यावश्यकत्वेन ज्ञापकत्वस्य सम्भवतीति वाच्यम् । न लुमतेति निषेधस्य आगदृक्तन्यात्प्रत्ययलक्षणाऽभावेन विभक्तिपरत्वाऽभावादत्र तत्र नुमोऽप्राप्त्यात्तद्वारणार्थं कृतस्याऽचीत्यस्य वैयर्थ्येन ज्ञापकत्वस्य सुस्थत्वात् । न चोत्तरार्थत्वेन तस्य ज्ञापकत्वासम्भव एवेति वाच्यम् । लाघवात्तत्रैव कर्त्तुमुचितत्वेनेह करणे वैयर्थ्यस्य स्पष्टत्वात् । एवञ्च

नतिषेधसूत्रस्याऽनित्यत्वेऽचिग्रहणस्य ज्ञापकत्वं युक्तमेव । तथा च, अनित्यत्वपक्षे तदप्रवृत्त्या प्रत्ययलक्षणेन सम्बुद्धिपरत्वाद्गुणे हे पारे इत्यपि साधु भवत्येव प्रयासमन्तरेणैवोक्तभाष्यप्रयोगोपपत्तिरित्यलं पल्लवितेन ॥

ननु भाषितपुंस्कं यस्य भाषितः पुमान्येन शब्देनेत्यर्थकरणेऽजादिशब्दे तत्सत्त्वेऽपि पीलुशब्देनाऽपि पुंसो भाषितत्वात्तत्र पुंवद्भावापत्तिप्रसक्तेर्दुर्वारत्वात् भाषितः पुमान् यस्मिन् प्रवृत्तिनिमित्तरूपेऽर्थे इति बहुव्रीहिः । प्रत्यासत्त्या भाषणक्रियया समानाधिकरण्येनाक्षिप्तशब्दस्य कर्त्रैव समानाऽनुपूर्वीकः समानार्थश्च गृह्यते, ततोऽर्शआदित्वादचि भाषितपुंस्क इति, तत्फलितमाह—प्रवृत्तिनिमित्तैक्ये इति । तत्त्वञ्च वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वम् एवञ्च प्रवृत्तिनिमित्ते भाषितपुंस्कस्य शब्दस्य पुंवद्भाव इति तदर्थं यस्य शब्दस्य पुंस्त्वस्त्रीत्वयोरेकप्रवृत्तिनिमित्तं तस्य पुंवत्त्वमिति पर्यवसितोऽर्थः । तथा च, अजादिशब्दस्य पुंसि स्त्रियं चाऽऽरोपिताऽजादित्वं प्रवृत्तिनिमित्तमेकमेवेति भवत्येव पुंवत्त्वम् । पीलुशब्दस्य तु वृक्षवृक्षत्वव्याप्यजाति प्रवृत्तिनिमित्तं फलत्वव्याप्यजाति प्रवृत्तिनिमित्तमित्युभयत्रैकजातेस्तत्राऽभावेन न पुंवत्त्वमित्यभिप्रेत्याह—पीलुने अत्र न पुंवत् प्रवृत्तिनिमित्तभेदादिति ॥

ननु यदि आमिति स्थितावच्परत्वेन प्राप्तं नुमं बाधित्वा नुमचिरेति नुटि ततो हल्परत्वात् (एकदेशविकृत) न्यायेन रायो हलीत्यात्वे प्रराणामिति साध्यं । अन्यथा नुमा नुण्निमित्तीभूतह्रस्वीयसन्निपातो दीर्घेणाऽस्य विनाश्य इति सन्निपातपरिभाषाया अविषयत्वेनाऽप्रवृत्त्याऽऽत्वे बाधकाऽभावादुक्तमेवोक्तरूपं सामान्यतो नुड्विषये उक्तपरिभाषाया अप्रवृत्तेरिति तद्भाव । नचैवं रामाणामित्यत्र नामीत्यनेन नुण्निमित्तह्रस्वसन्निपातविघातस्यावश्यं जायमानतया नुक्परिभाषाऽविषयत्वेन सुपि चेति दीर्घे कथमुक्तपरिभाषाप्रवृत्तिरिति वाच्यम् । नामीति दीर्घेण नित्यत्वात् सुपि चेति दीर्घस्य बाधे नाऽप्रवृत्त्याऽऽवश्यकत्वेनोक्तपरिभाषयैव तदप्रवृत्तिकल्पनादिति । परमेतदाशय 'आपलोप' इत्यत्र षाष्ठभाष्यकैयटविरोधादुपेक्ष्य, तत्र हि अनङ्शकारोच्चारणाऽभावे नाप्नलोप इति न्यासे पञ्चानामित्यत्र दीर्घनलोपयो प्राप्तौ परत्वान्नलोप इत्युक्तंभाष्ये । सामान्यापेक्षज्ञा

पे तु मलोपापेक्षया सुपिचेति दीर्घस्य परत्वादस्यैव प्रवृत्तौ तद सङ्गत स्यादिति नाप्नोति दीर्घं कर्त्तव्य, पूर्वोक्तपरिभाषाऽनित्यत्व मान्यत्रेन्यरुचे 'कष्टाये'ति निर्देशेनाऽनित्याया सन्निपातपरिभाषा या सुपिचेति दीर्घेऽप्रवृत्तिकल्पनेऽपि सामान्यतो दीर्घेऽप्रवृत्तिकल्प नाया न किमपि विनिगमकमित्यरुचेश्चाह-वस्तुतस्तु, मरीणामिति । इत्यजन्ता नपुंसकलिङ्गा ॥ ५ ॥

---

## अथ हलन्तपुंल्लिङ्गप्रकरणम् ।

१ ननु 'दादेर्धातोर्घ' इत्यत्र भाष्ये धुगित्यत्र ढत्वमाशङ्क्याऽपवाद त्वेन समाधाय, अथवा एव वक्ष्यामि होढोऽदादेरिति ततो धातोर्घ इति दादेरिति वर्तते नेति निरुक्तमित्युक्तम् । एवञ्चाऽदादिधातुहका रस्य ढत्वविधानेनेव दादिधातुहकारस्य घत्वसिद्धौ भाष्यरत्नाऽनुवृ त्तस्य दादिपदस्योत्तरयोगे फलान्तराऽभावेन सामर्थ्याद्दादिपदमौप देशिकदादित्ववदुपलक्षकमित्यभिप्रायेण फलितार्थमाह-उपदेश इति न च दान्यभिन्नधातुहकारस्य ढत्वमित्यर्थकस्य होढोऽदादेरितिन्यास स्याऽभ्युपगमे धुडित्यादौ दान्त्वेन तद्भिन्नत्वाऽभावाद्ढत्वानापत्ति रिति वाच्यम् । 'धा द्रुहमुहे'ति सूत्रे दाग्रहणस्य समुच्चयार्थकत्वेन ढस्याऽनुवृत्तौ तद्विधानादाऽदोषात् । नन्वेवमपि दादित्वेन दामलिडि त्यत्र ढत्वम् स्याद्दादिभिन्नधातुहस्यैव तद्विधानादिति वाच्यम् । उत्त रयोगे दादिपदस्यौपदेशिकदादित्ववत एव ग्रहणेन पूर्वयोगेऽप्य र्थ ऽधिकाराऽनुरोधात्तादृशस्यैवाऽदादिघटकदादिपदस्य ग्रहणेन नदुप पत्ते । उक्तव्याख्यानलब्धोपदेशपदग्रहणे किंफलमित्याह—उपदेश किमिति । (१) अव्याप्त्यति व्याप्तिदोषव्यावृत्त्यर्थमावश्यकमुपदेशपदम् । तथा हि, अधोगित्यत्राऽडागमे दादित्याऽभावाद्घत्व नेत्यव्याप्ति, दामलिडित्यत्र दादित्वेन घत्व स्यादित्यतिव्याप्तिरिति भावः ॥

ननु सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमिति सिद्धान्त, तथा च लाघवात्सामानाधिकरण्यान्वयस्याऽभ्युपगमे ए काच्रूपो यो धातुर्भषन्तस्तदवयवस्य वशो भषित्यर्थे गर्द्धबित्यादौ भष्

---

(१) अ याप्तीति । लक्ष्ये लक्षणस्यागमनमव्याप्ति अलक्ष्ये लक्षणगमनमतिव्याप्ति ।

भावो न स्यात्तस्याऽनेकाच्त्वादिति वैयधिकरण्याऽन्वय एव युक्त इत्याशयेनाह—एकाचो धातोरिति ॥

झलीति निवृत्तम् । इत्योर्ग्रहणसामर्थ्यादिति ॥ न च धुग्भ्या धुक्षित्यादौ भष्भावार्थं झलीत्यस्यावश्यकत्वेन मूलोक्तमसमीचीन मिति वाच्यम् । पदान्ते इत्येव तत्र तदुपपत्ते । न च बुबुधिषे इत्यत्र भष्भावनिवृत्त्यर्थं ध्वमो झलीति विशेषणस्याऽऽवश्यकत्वेन निवृत्त मित्युक्तिरसङ्गतेति वाच्यम् । इटो ध्वमवयवत्वाऽभावेऽपि भष्भावनि मित्तध्वशब्दानवयवत्वादेकाच्ध्वशब्दयोरिटा व्यवधानेन स्वत एव भष्भावाऽप्राप्त्या दोषाऽभावेन झलीतिविशेषणस्यानावश्यकत्वेन मूलोक्तस्य सुसङ्गतेरिति भाव ।

ननु द्रुहेर्णत्वे धात्वयवमेकाच्रूप द्रु इति उधिति च तत्राऽऽद्यो न झष् तोऽन्त्ये न बश् द्रुधिति तु नाऽवयव इति भष्भावो न स्यादि त्यत आह—(१) व्यपदेशिवद्भावेनेति । एकस्मिन्नसहाये व्यपदे शिना मुख्यव्यवहारवता तुल्यो व्यपदेशो भवतीति तदर्थं ।

नन्वु धुगित्यादे प्रातिपदिकत्वेन धातुत्वाऽभावेन तत्कार्यं भष्भावो न स्यादिति चेन्न । 'अत्वसन्तस्य चाऽधातोरि'ति सूत्रेऽधातोरिति निषेधसामर्थ्येनाऽप्रधानक्रियावाचकस्यापि धातुत्वबोधनेन तदुपपत्ते न च (२)( धातोरुच्यमान-कार्य्यं-तत्प्रत्यये ) इति परिभाषया धातुश ब्दमुच्चार्य्य विहितप्रत्यये एव तत्कार्य्यविधानादिहाऽनधात्वेन धातु कार्य्यं न स्यादिति वाच्यम् । भष्भावस्य धातुकार्य्यस्य पदान्तनिमि त्तत्वेन प्रत्ययनिमित्तत्वाऽभावादुक्तपरिभाषाऽप्रवृत्ते । प्रत्यये परे धा तोरुच्यमानं कार्य्यं धातुशब्दमुच्चार्य्य विहितप्रत्यये एव भवतीति परि भाषाऽर्थ इति भाव । अत एव 'नशेर्वाऽप्रशानि'ति सूत्रेऽप्रशान्ग्रहणं चरितार्थम्, अन्यथा 'मो नो धातोरि' त्यत्राप्युक्तपरिभाषा प्रवृत्तौ नत्वा प्राप्त्या तन्न्यासम्भवेन तद्व्यावृत्त्यर्थन्तद्ग्रहणं व्यर्थमेव स्यात् । न चो

(१) व्यपदेशिवदिति । व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषास्वरूपम् । पूर्वान्तवत्पूर्वादिविरित्येकयोग एव कर्तव्य पृथग्योगकरणमस्या ज्ञापकम् ।

(२) धातोरिति । धातोरुच्यमानं यत्कार्य तत् धातुविहित प्रत्यये भवतीत्यर्थं । अत्र औणादिक नत्वविधानमस्या ज्ञापकम् ।

त्परिभाषाप्रवृत्तौ सुधियावित्यादावियङ् न स्यादात्वित्यस्य धातु त्वशब्देन विहितप्रत्यय ग्राह्यादिति वाच्यम्। वस्तुत इयङाऽङ्गस्यै वाच्यमानत्वेन धातोरभावेनात्परिभाषाऽप्रवृत्तेरिति भाव ॥

ननु 'वहश्चे'ति सूत्रे 'छन्दसि सह' इत्यतश्छन्दो ग्रहणाऽनुवृत्त्या वहेरपि छन्दस्येव ण्विविधानेन लोके विश्ववाहशब्दस्य कथ प्रयोग इत्यत आह—छन्दस्येव ण्विरिति पक्षे तु णिजन्ताद्विजिति। णिज न्ताद्विश्वशब्दपूर्वकाद्वाहेर्विचि णिलोपे लोकेपि विश्ववाहशब्दप्रयोग उपपन्न इति भाव । नचाऽङ्गभसंज्ञाऽऽक्षिप्तप्रत्ययेन वाहो विशेषणेना आदिप्रत्ययपरश्चाऽव्यवहितपूर्वस्य वाह सम्प्रसारणमित्यर्थे णिलोप स्य स्थानिवत्त्वेन व्यवधानात्सम्प्रसारण न स्यादिति वाच्यम्। विच क्विपापलक्षकत्वेन यो लुप्त न स्थानिवदिति स्थानिवत्वनिषेधेनाऽदो षात् । न चोक्तस्थानिवत्त्वनिषेधवचनस्य सङ्कुचितविषयत्वेन यौ विधि प्रति न स्थानिवदित्यस्य क्विप्शब्दसशब्देन विहितविधावेव प्रवृत्त्यभ्युपगमन वन्यादिभ्यो विहिते क्विति सम्प्रसारणमिति 'नचि सुपी'त्यस्य व्याख्यानेन णिजन्तात्क्विपोऽविहितत्वेन निषेधाऽप्राप्त्या स्थानिवत्त्वस्य दुर्वारत्वाद्व्यवधानेन सम्प्रसारण न स्यादिति वाच्यम्। 'विभाषा पृथ्वी'ति सूत्रभाष्ये प्रष्ठोह आगत प्रष्ठवाड्रूप्यमित्तिला क्षिकविग्रहवाक्य प्रष्ठोह इति प्रयोगदर्शनेन लोकेऽपि ह्वचिणिवरिति कल्पनेनोक्तापत्तेरयोगादिति दिक् ॥

ननु सामान्यविहितस्य व्यापकविषयताकस्याऽऽमोऽपेक्षयानुमो विशेषविहितत्वेन व्याप्यविषयकत्वात्सकन्यायमूलकेन(१) (येननाप्राप्ति) न्यायेन नुमाऽऽमो बाधे पुनरामोऽप्राप्त्याऽनड्वानिति एव सम्बोधने नुमाऽऽमो बाधेन हे अनड्वनिति च नोपपद्येतेत्याशङ्क्य समाधत्ते— आदित्यधिकारादिति । 'आच्छीनद्योर्नुमि'त्यतस्तदनुवर्त्तनादनड् हशब्दाऽन्त्यावर्णात्परो नुमित्यर्थेऽम उपजीव्यत्वान्न तत प्राङ्नुम प्राप्तिरिति न कश्चिद्दोष, उपजीव्योपजीवकयोर्बाध्यबाधकभावो न भवति यथा पितुरुत्पन्न पुत्र पितर न हन्यात् एव पिता पुत्र न हन्यादिति भाव ॥

(१) येन नेति। येन नाप्राप्ते यो विधिरारभ्यत स तस्य बाधको भवतीति न्यायस्वरूपम्।

मावश्यकेन द्वित्वे परसवर्णस्य सिद्ध प्रक्रान्तम् इति वार्त्तिकेनोक्त परिभाषाया वर्णद्वित्वेऽप्रवृत्तिकल्पनात्, अन्यथा द्वित्व प्रत्युक्तप रिभाषया पूर्वत्रेत्यस्याऽप्राप्तौ परसवर्णस्य सिद्धत्वेन द्वित्वे कृते भाष्यो क्तप्रयोगोपपत्त्यानुक्तवार्त्तिक स्पष्टमेव व्यर्थं स्यादेवञ्च द्वित्वे कर्त्तव्येऽपि पूर्वत्राऽसिद्धमित्यस्य प्रवृत्तौ द्वित्वस्याऽसिद्धत्वेन णत्व स्येव प्रवृत्त्यानुक्तदोषाऽभावात्। न च वाक् वाक् इति भाष्योदाहर णोपपत्तये वर्णद्वित्वेऽप्युक्तपरिभाषाप्रवृत्तिरावश्यकी अन्यथा पूर्वत्रेत्य नेन चर्त्वस्याऽप्राप्तस्यैव द्वित्वेऽन्त्यस्य चत्व पूर्वत्र गश्रवणापत्ति। न च खरि चेत्यनेन पूर्वगस्य चर्त्वेन तत्सिद्धिरिति वाच्यम्। अवसान चर्त्वे स्यासिद्धत्वेन खर्परत्वाऽभावाच्चर्त्वाऽप्राप्त्या गश्रवणाऽऽपत्तेर्दुर्वार त्वात्। न च कस्य द्वित्वेऽप्यवसाने चर्त्वस्याऽसिद्धत्वाद्गकारे झशि परे पूर्वस्य जश्त्वे उक्तरीत्यैव चर्त्वाऽभावाद्गश्रवण दुर्वारमिति वाच्यम्। 'नमुने' इतिवत्पूर्वत्राऽसिद्धीयमित्यस्य द्वित्वे कृतेऽपि प्रत्यासत्त्या द्वित्वाऽऽश्रयस्य कार्ये कर्त्तव्येऽसिद्धत्वमित्यर्थेऽवसान चर्त्वस्याऽसिद्धत्वाऽभावेन झश्परत्वाऽभावात्पूर्वककारस्य जश्त्वा ऽनापत्त्या गश्रवणाऽऽपत्तिरूपदोषस्य विलयापत्ते। एवञ्च प्रकृतग्र न्थस्य कथ सगतिरिति चेन्न। द्वित्वे कर्त्तव्येऽन्यदसिद्धम द्वित्वन्त्व सिद्धमेवेत्युक्तपरिभाषाऽर्थकरणेन द्वित्वात्प्राङ्णत्वे ततो द्वित्वे तत्सङ्गतेरिति भाव ॥

ननु 'षट् चतुर्भ्यश्चे'ति सूत्रे (१)(गौणमुख्य) न्यायेन मुख्यार्थवा चकचतुर्शब्दस्यैव ग्रहणात्प्रियचतुर्शब्दस्य गौणत्वेनाऽग्रहणान्नुण् न स्यादित्याशयेनाऽऽह—गौणत्वे तु नुट् नेष्यत इति। केचित्तु सूत्रे बहुवचननिर्देशसामर्थ्याद्बहुत्वार्थकस्यैव चतुर्शब्दस्य ग्रहणादेक त्वाद्यर्थवाचकस्य तस्याऽग्रहणेन नुण् नेति वदन्ति तन्न, बहुवचननि र्देशस्य लाघवार्थत्वेन तस्मादुक्तकल्पनाया कर्त्तुमशक्यत्वादित्यलम्।

ननु कमलशब्दात्तत्करोति तदाऽऽचष्टे इति णिचि, इष्टवद्भावेन टिलोपे तत कर्त्तरि क्विपि 'णे रनिटी'ति णिलोपे तत प्रातिपदि कत्वेन सोरुत्पत्तौ तस्य 'हल्ङ्याब्भ्यो' इति लोपे कमलिति सिद्ध्यति अत्र अस परसिद्धमित्यत्र पञ्चमीसमासाश्रयणाट्टिलोपणिलोपयो स्थानिवत्त्वेन सोर्हल्परत्वाऽभावाल्लोपो न स्यादिति चेन्न। पूर्वत्रा

(१) गौणमुख्येति। गौणमुख्ययोर्मुख्ये कार्य सम्प्रत्यय इति

वस्तुतस्तु अकचि धित्व न प्राप्नोतीति भाष्यस्य अकच्सहितस्य धित्वं न प्राप्नोति, निर्दिश्यमानपरिभाषया सम्पूर्णस्य स्यादित्याशयः, अत एव 'अनाऽप्यक' इत्यत्राऽकोरिति चरितार्थम्, अन्यथा तन्मध्यपतितन्यायगृहीतस्यानिर्दिश्यमानत्वेनादेशाऽप्राप्तौ तस्य स्पष्टमेव वैयर्थ्यमित्यलम् ॥

नन्विद म इति स्थिते स्मायाऽऽदेशात्पूर्वत्वादनादेशे (१) (सकृद्गति) न्यायेन पुनः स्मायादेशो न स्यादित्याशङ्क्य समाधत्ते—नित्यत्वाद्डेः स्मै इति । (२)कृताऽकृतप्रसङ्गिनो विधेर्नित्यत्वेन स्मायादेशस्याऽनाऽऽदेशे कृतेऽकृते च प्राप्त्या नित्यत्वादनादेशं बाधित्वा स्मायादेश एव जातः न चाऽनादेशस्याऽप्युक्तरूपनित्यत्वस्य सत्त्वादयमेव कुतो नेति वाच्यम् । लक्ष्याऽनुरोधेन बाधकाऽबाधितकृताकृतप्रसङ्गित्वरूपनित्यत्वस्याऽभ्युपगमात् । 'अनाऽप्यक' इत्यस्य 'हलि लोप' इत्यनेन बाधेनाऽतथात्वादिति भावः ॥

ननु अनुनासिकविधानेनैव त्यदाद्यत्वे हलि लोपेनाऽऽभ्यामित्यादिसमीहितरूपोपपत्तावलमशिविधानेनेत्याशङ्क्य समाधत्ते—अशिवचनं साकच्कार्थमिति । शित्वादकजिरशिष्टस्याऽऽदेश इति भावः । न च 'त्यदादीनाम' इत्येतद्विहिनाऽकारस्याऽकारविधानसामर्थ्यादेव सर्वादेशत्वसिद्धौ शित्करणं व्यर्थमेवेति वाच्यम् । अकारविधानसामर्थ्यात्सर्वादेशत्वस्तुपिचेति दीर्घाऽभावस्यापि ज्ञापनसम्भवात् । एवञ्च स्पष्टार्थमेवाऽशग्रहणमिति भावः । केचित्तु अनुदात्तत्वार्थमेवाऽकारविधानमिति सन्देहः यावृत्त्यर्थमशग्रहणमिति वदन्ति । वस्तुतस्तु अश इति प्रश्लेषादकारद्वयविधानसामर्थ्यात्सर्वाऽऽदेशत्वसिद्धावशग्रहणं व्यर्थमेवेति बोध्यम् ॥

नलोप, राजेति । ननु राजानि यस्य प्रत्ययलक्षणेन सुबन्तत्वात्पदत्वेऽपि तेनैव प्रत्ययलक्षणेन प्रत्ययान्तत्वात्प्रत्यय इति निषेधेन प्रातिपदिकत्वाऽभावान्नलोपो न स्यात्प्रातिपदिकसंज्ञकं यत्पदं तदन्तनकारस्यैव लोपविधानादिति चेन्न । अप्रत्यय इत्यत्र पर्युदासात्प्रत्ययान्तभिन्नस्य प्रत्ययान्तसदृशस्य प्रातिपदिकत्वमित्यर्थे यथोद्देशपक्षे प्राक्कृता प्रातिपदिकसंज्ञामादाय नलोपोपपत्तेः । न च कार्यकालपक्षे

(१) सकृद्गतीति । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति स्वरूपम् ।

(२) कृताकृतेति । तदुक्तं कचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता ।

तादवस्थ्यमेवोक्तदोषस्येति वाच्यम्। व्यवस्थितपक्षद्वयमध्ये एकतरपक्षेण लक्ष्यसिद्धावितरपक्षेण दोषदानस्य भाष्ये क्वाऽप्यनुपन्यासात्। न चाप्रत्यय इत्यत्र प्रसज्यप्रतिषेधाऽऽश्रयणे प्रत्ययान्तस्य प्रातिपदिकत्वाऽविधानादत्र पक्षे लोपेनैव जातनिवृत्तेरपि यत्तु शक्यत्वेनोक्तदोषो दुर्वार एवेति वाच्यम्। 'न ङिसम्बुद्ध्योरि'ति निषेधसामर्थ्यात् प्रत्ययलक्षणेन प्रत्ययान्तत्वमादाय न निषेधप्रवृत्तिरिति ज्ञापनेनाऽदोषादिति भावः ॥

ननु राजन्शब्दाच्छसि लशक्वेति शस्येत्त्वे 'यचि भमि'ति भत्वे 'अल्लोपोऽन' इत्यल्लोपे राजन् असित्यवस्थायाम् 'अचः परस्मिन्नि'त्यत्र पञ्चमीसमासाऽऽश्रयणादल्लोपस्य स्थानिवत्त्वेन व्यवधानाच्चुत्वाऽप्राप्तौ राज्ञ इति न सिद्ध्येदित्यत आह—**नचाल्लोपः स्थानिवदिति**। पूर्वत्राऽसिद्धे न स्थानिवदिति स्थानिवत्त्वनिषेधाच्चुत्वाऽनाऽऽपत्तिरिति भावः। न च पूर्वत्राऽसिद्धीयस्य 'वाह ऊठि'ति सूत्रस्थाद्ग्रहणेन ज्ञापितयाऽन्तरङ्गपरिभाषयाऽन्तरङ्गे श्चुत्वे कर्त्तव्ये बहिरङ्गाऽल्लोपस्याऽसिद्धत्वप्रत्याख्यानात्पूर्वोक्तस्य श्चुत्वाऽनाऽऽपत्तिरूपदोषस्य तादवस्थ्यमेवेति वाच्यम्। यथोद्देशपक्षे उक्तपरिभाषाप्रति श्चुत्वविधायकशास्त्रस्याऽसिद्धत्वादन्तरङ्गशास्त्राऽभावेन प्रतिपाद्याऽभावात्परिभाषाऽप्रवृत्तेः, तथा च श्चुत्वे कस्याऽपि व्यवधानरूपप्रतिबन्धकस्याऽसत्त्वादुक्तप्रयोगोपपत्तिः सुलभैव। न च कार्यकालपक्षे विधिशास्त्रप्रदेशे कार्यार्थं परिभाषाऽपकर्षणादस्या उक्तशास्त्रदृश्यत्वादिमाम्प्रत्यन्तरङ्गशास्त्राऽसिद्धत्वाऽभावेन परिभाषाप्रवृत्तौ बाधकाऽभावात्पूर्वोक्तदोषस्तदवस्थ एवेति वाच्यम्। एकतरपक्षेण लक्ष्यसिद्धौ पक्षाऽन्तरमवलम्ब्य दोषदानस्य भाष्ये क्वाऽप्यनाऽऽश्रयणात्। वस्तुतस्तु कार्यकालपक्षेऽप्युक्तपरिभाषाऽप्रवृत्तेरुक्तत्वाच्चेति दिक् ॥

ननु प्रतिदिवन्शब्दाच्छसि शस्येत्त्वे भत्वे अल्लोपे प्रतिदिव्न् अस् इति स्थितौ पञ्चमीसमासाऽऽश्रयणादच परस्मिन्निति स्थानिवत्त्वादिकारस्योपधात्वाऽऽभावाद्धलि चेति दीर्घाऽप्राप्तौ प्रतिदीव्न इत्येतद्रूपस्य सिद्धिर्न स्यादिति सन्देहे जाते समाधानमाह—**नचाऽल्लोपस्य स्थानिवत्त्वमिति**। 'न पदान्त'सूत्रेण दीर्घविधौ कर्त्तव्ये स्थानिवत्त्वनिषेधाद्दीर्घे इष्टप्रयोगसिद्धिः, न चाऽन्तरङ्गपरिभाषयाऽन्तरङ्गे दीर्घे

प्रसक्तिरेवेति वाच्यम्। अमहत्पूर्वग्रहणेनाऽनुपसर्जनाधिकारेण च तदन्तविधिज्ञापनेनाऽजाद्यतेभ्यष्टाबित्यर्थे टाप्प्रसक्तेर्दुर्वारत्वात्। नचेदमपि स्त्रियामिति श्रुतत्वादेवाऽजादिविशेषणं स्यात् ततश्चोक्ताऽऽपत्त्यसम्भवे षष्ठ्यन्ततया व्याख्यानमनुपयुक्तमेवेति वाच्यम्। अनुपसर्जनाधिकारेण तदन्तग्रहणस्यैव स्त्रियामित्यस्य तदन्तविशेषणतायाः अपि ज्ञापनात्। अत एवातिसुत्वर्गेत्यादिसिद्धिः इह तु षष्ठ्यन्ततया व्याख्यानसामर्थ्यादेव गृह्यमाणविशेषणत्वम्, पञ्चाजशब्दवाच्यस्याजशब्दवाच्ये योऽजातिमात्रवाच्यत्वस्य विवक्षितत्वान्नेह टाबिति भावः॥

शूद्रा चामहत्पूर्वा जातिरिति। अत्र शूद्राचेत्येको योगः, अमहत्पूर्वा जातिरित्यपरो योगः, तत्र पूर्वयोगे जातेरित्यनुकर्षात् शूद्रशब्दष्टाप लभते जातिश्चेद्वाच्येति तात्पर्योऽर्थः, स्त्रीत्वं तु प्रत्यासत्त्या शूद्रशब्दार्थसमवेतमेव गृह्यते, तथा च, शूद्रशब्दार्थसमवेते स्त्रीत्वे द्योत्ये जातिवाचकाच्छूद्रशब्दाट्टाप्प्रत्ययः स्यादिति फलितोऽर्थः, तथा च पञ्चानां शूद्राणां समाहारः पञ्चशूद्री, अत्र समाहारनिष्ठस्त्रीत्वस्य शूद्रशब्दार्थसमवेतत्वाभावाच्च टाप्, शूद्रस्य स्त्री शूद्रीत्यत्र तु जातिवाचकत्वाभावाच्च टाप् जातिमात्रप्रवृत्तिनिमित्तकस्यैव जातिवाचकत्वात्, इह तु शूद्रशब्दसम्बन्धित्वं प्रवृत्तिनिमित्तं न तु शूद्रत्वम् न चेह शूद्रशब्दस्य सम्बन्धिनि लक्षणया बोधकस्य लाक्षणिकत्वरूपगौणतया (१) (गौणमुख्य) न्यायेन टापो वारणमिति वाच्यम्। पदकार्य एवोक्तन्यायप्रवृत्तेः। विभक्तिनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वं हि पदकार्यत्वम्, टापः स्त्रीत्वनिमित्तकत्वेन तत्त्वायोगात्॥

अमहत्पूर्वा जातिरिति द्वितीययोगस्य महत्पूर्वकश्शूद्रशब्दष्टाप न लभते जातिश्चेद्वाच्येत्यर्थः। महाशूद्रीति। आभीरजातिवाचकान्महाशूद्रशब्दादुक्तयोगेन टापो निषेधाज्जातिलक्षणे ङीषपि सिध्यतीति फलम्। ननु आभीरजातिवाचकमहाशूद्रघटकश्शूद्रो नाभीरजातिवाचको नापि तदर्थगतं स्त्रीत्वमिति शूद्रशब्दात् महाशूद्रशब्दाच्च प्रापकाभावाट्टापोऽप्रसक्त्या विफल एव निषेध इति चेन्न। स्त्रीप्रत्यये तदन्तविधिर्नास्तीत्यस्य ज्ञापनेन शूद्रशब्दात् टाबित्यर्थे महाशूद्रशब्दात्प्रा

(१) गौणमुख्येति। गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय इति तत्स्वरूपम्।

न्तस्य टापो निषेधेन साफल्यात् । नन्वेवमपि (१) (अर्थवद्ग्रहण) परिभाषयाऽर्थवच्छूद्रशब्दान्तादेव टाप् स्यात् इह तु महाशूद्रशब्दोऽर्थवाननु तदवयवः शूद्रशब्द इति पुनस्तदन्तत्वमेव टापोऽप्रसक्त्या निषेधवैयर्थ्यमिति चेन्न । शूद्रधारोपेण महाशूद्रशब्दस्याभावे प्रयोगाच्छूद्रशब्दस्यार्थवत्त्वानपायात् । प्रतिपादितं चैतच्छेखरे । न च महाशूद्रशब्दस्य जातिवाचकत्वाऽव्यभिचारेणोक्तरयोगे जातिरिति व्यर्थम् । महतीशूद्रेत्यर्थे तु समासात्प्रागेवाऽन्तरङ्गत्वाट्टापि महाशूद्रेत्येवेति वाच्यम् । मृगक्षीरकुक्कुटाण्डमित्यत्रेव पूर्वं स्त्रीत्वस्याविवक्षया टापोऽप्रसक्त्या शूद्रशब्दस्य महच्छब्देन समासे निष्पन्नस्य महाशूद्रशब्दस्य जातिवाचकत्वाभावेन निषेधाऽप्राप्त्या महाशूद्रेत्येव भवति, जातिग्रहणाभावे टापो निषेधाज्जातिलक्षणङीषोपि उक्तरूपानुपपत्ते । न च जातिवाचकत्वाऽभावे ङीषोऽप्यसम्भव इति वाच्यम् । शूद्रशब्दस्य जातिवाचकत्वेन तदन्तान्ङीषो दुर्वारत्वादिति भावः ॥

ननु 'वनो र च' इति सूत्रे वन इति निरनुबन्धकस्य ग्रहणेन (तदनुबन्धकग्रहणे नातदनुबन्धकग्रहणमि)ति परिभाषया अप्रवृत्तिरित्याशयेनाह—वन इति सामान्यग्रहणमिति ॥

ननु 'वनो र चे'त्यनेन वन्नन्तप्रातिपदिकान्ङीब्विधानेऽपि धीवरीत्यादौ वन्नन्तत्वाभावान्ङीप् न स्यादित्यत आह— प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति । एतत्सिद्धिप्रकारश्चेत्थम्, तथा हि यस्मात्प्रत्ययविधिस्तदादि प्रत्यये इति योगविभागे गृह्यमाणे, उपतिष्ठते इति च शेषे, तत्र चायमर्थः प्रत्यये गृह्यमाणे यस्मात्प्रत्ययविधिस्तदादीत्युपतिष्ठते इति तदाद्यंशसिद्धिः, तदन्तांशस्य सिद्धिस्तु वन्नन्तेति विशेषणं प्रातिपदिकमिति विशेष्यमादाय 'येन विधिस्तदन्तस्य'नेनैवेति, देवदत्तश्चिकीर्षतीत्यादौ देवदत्तादेः सन्नन्तत्वप्रयुक्तकार्याभाव एतत्फलम्बोध्यम् । न च (ग्रहणवते)ति निषेधात्कथमिह तदन्तविधिरिति वाच्यम् । अनुपसर्जनाधिकाराऽमहत्पूर्वग्रहणाभ्यामिह प्रकरणे तदन्तविधेर्ज्ञापनात् । वन इत्यस्य प्रातिपदिकत्वाभावेन निषेधायोगाच्चेत्यलम् ॥

---

(१) अर्थवद्ग्रहणेति । अर्थवद्ग्रहणे नानर्थकस्य ग्रहणमिति परिभाषास्वरूपम् ॥

ननु ( अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा ) इति न्यायेन 'न षट् स्वस्रादिभ्य' इत्यनेनाऽव्यवहितङीप एव निषेधः स्यात्तु ङीप्टापोरिति चेन्न । स्त्रियां यत्प्राप्तं तन्नेति व्याख्यानेनोभयनिषेधादित्याशयेनाह—पञ्च, चतस्र इत्यादि । अयम्भावः, पञ्चेत्यत्र नलोपे तस्य षट्संज्ञां प्रत्यसिद्धत्वान्नान्तत्वेन षट्संज्ञायां न षट्स्वस्रादिभ्य इति निषेधे न टाबिति, इत्थमसिद्धत्वोपवर्णनं कार्य्यकालपक्ष एव न तु यथोद्देशपक्षे अत्र च पक्षे पञ्चन्निति नान्ते जायमानषट्त्वस्यैकदेशविकृतन्यायेनादन्तेऽपि सुलभत्वात् । नचोक्तन्यायस्य स्थानिवत्सूत्रे उपसंख्यानादल्विधौ प्रवृत्तिर्न स्यादिति वाच्यम् । षट्त्वस्याऽल्विधित्वाभावात्तदाश्रयविधीनामपि तत्त्वाभावेन निषेधाऽप्राप्त्या न्यायप्रवृत्तौ बाधकाभावात् । नचाऽन्तरङ्गपरिभाषयैवाऽन्तरङ्गे टापि कर्त्तव्ये बहिरङ्गनलोपस्यासिद्धत्वेन नान्तत्वात्षट्त्वेन निषेधोपपत्तौ मूलोक्तप्रयासस्य वैफल्यमिति वाच्यम् । परिभाषाया संज्ञाशास्त्रविषयत्वानाश्रयणेन तदप्रवृत्त्या मूलोक्तप्रयासस्य साफल्यात् । न च 'न लोपः सुप्स्वरे'ति सूत्रे संज्ञापदेन घिसंज्ञाग्रहणात्तां प्रति नलोपासिद्धत्वेन 'द्वन्द्वे घि'रित्यस्याऽप्राप्त्या- विनिगमनाविरहात्पर्यायेणोभयोः पूर्वप्रयोगे दण्डिदण्डिनौ दण्डिदण्डाविति भाष्योदाहरणोपपत्तिः, न च 'द्वन्द्वे घि'रिति पूर्वपदत्वे नलोपे च सति घित्वं घित्वे च पूर्वप्रयोग इति परस्परापेक्षारूपान्योन्याश्रयदोषापत्तिरिति वाच्यम् यस्य पूर्वपदत्वे घित्वं भावि तत्पूर्वं प्रयोज्यमिति तत्सूत्रार्थकरणादन्योऽन्याश्रयापत्तेरभावात् । तथा च तत्र घिसंज्ञाया एव ग्रहणे षट्संज्ञां प्रति नलोपासिद्धत्वानापत्तौ षट्त्वाभावान्निषेधाऽप्राप्त्योक्तदोषस्तदवस्थ एवेति वाच्यम् । निषेधशास्त्रस्य स्त्रियां यत्प्राप्नोति तन्नेति भाष्यसिद्धान्तभूतार्थाश्रयणबलेन भूतपूर्वषट्त्वमादाय निषेधेनादोषादिति दिक् ॥

ननु 'प्रत्ययस्थात्का'दिति सूत्रे पूर्वस्येत्यस्याभावे पञ्चमीसप्तम्या निर्देशात् 'तस्मादित्युत्तरस्य' तस्मिन्निति निर्दिष्टे पूर्वस्ये'त्यनयोः प्राप्तौ (१)(उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ) अनया 'तस्मा'दिति परिभाषोपस्थित्या प्रत्ययस्थककाराद्व्यवहितपरस्याऽकारस्य-

-( १ ) उभयनिर्देश इति । पञ्चमीनिर्देशस्याऽगत्यकाशत्वमस्याः प्रवृत्तौ बीजम् । उभयनिर्देशस्य सावकाशत्वेऽपि पञ्चमीनिर्देशस्य परत्वमेतत्प्रवृत्तौ बीजम् ॥

त्वमित्यर्थे कटुकेत्यत्र कटुक आ इति स्थितान्तरङ्गत्वात्प्राप्तमपि सवर्णदीर्घं (१) (वार्णादाङ्गं बलीयः) इत्यनया परिभाषया (२) (येन नाप्राप्ति) न्यायेन अपवादस्याप्यपवादत्वेऽत्वापत्तिरतस्तदावश्यकम्। न च सर्विका कारिकेत्यादावेव परस्येत्त्वापत्तिवारणाय तदावश्यकत्वे कटुकेति प्रत्युदाहरणोपन्यासो न युक्त इति वाच्यम्। इहादिति तपरकरणग्रहणाच्च तस्मादिति परिभाषाबाधेऽपि न सर्वथा बाध, पराशबाधेनैवोपपत्तावव्यवहितांशबाधे मानाभावस्तथाच प्रत्ययस्थककारान्यवहितस्यात इत्त्वमित्यर्थे पूर्वपरयोः प्राप्तौ पूर्वस्यैवेत्यर्थेस्याऽनुनासिक इत्यादि निर्देशेनोपपत्तौ सर्विकेत्यादावदोषात्। एवञ्च युक्त एव कटुकेति प्रत्युदाहरणोपन्यास इत्याशयेनाह—पूर्वस्य किम्। परस्य माभूत्कटुकेति। केचित्तु 'प्रत्ययस्थे के'ति न्यासमङ्गीकृत्य पूर्वस्येति खण्डयन्ति, तेषामयमाशयः, तथा न्यासे सप्तमीनिर्देशात्तस्मिन्निति परिभाषोपस्थितौ प्रत्ययस्थककारादव्यवहितपूर्वस्याऽत इदित्यर्थे परस्याऽकारस्येत्त्वाऽप्राप्तौ कटुकेत्यत्र दोषाभावादलन्तद्ग्रहणेनेति॥

आतः किम्। साँकाश्यिकेति। ननु स्त्रीबोधकाकारस्येत्त्वमिति 'उदीचामि'ति सूत्रस्यार्थेऽकारस्य स्त्रीप्रत्ययावयवत्वेऽप्यस्त्रीबोधकत्वेन न तत्रेत्त्वापत्तिरिति चेन्न। सकाशेन निर्वृत्तं नगरं साकाश्यम् 'सकाशादिभ्यो ण्यः' इत्यनेन ण्यप्रत्यये तत्र भवेति विग्रहे 'धन्वयोपधाद्वु'ञिति वुञि तस्याऽकादेशे साकाश्यिकेत्यत्र स्त्रीप्रत्ययावयवाऽकारस्येत्त्वमिति सूत्रस्यार्थकरणे दोषस्य तादवस्थ्यात्। न च स्थाने ग्रहणस्य सद्भावादवयवषष्ठ्यभावेन न दोष इति वाच्यम्। भाष्यकृता तस्य प्रत्याख्याततत्वात्। न च साक्षाद्विधेयविशेषणे चरितार्थाना परिभाषाणां विधेयविशेषणविशेषणे न प्रवृत्तिरित्यर्थक (३) विधौ परिभाषोपतिष्ठते नानुवादे इत्येतत्परिभाषाज्ञापनार्थं स्थानेग्रहणस्या

(१) वार्णादाङ्गमिति। वर्णत्वावच्छिन्नोद्देश्यककार्यापेक्षयाऽङ्गोद्देश्यककार्यस्य बलवत्त्वमित्यर्थः।

(२) येननाप्राप्तीति। येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति तत्स्वरूपम्।

(३) विधाविति। परिभाषाणामवश्यप्राप्तपरम्पराधिकपरम्परया विधे

पत्त्वेव । नचानेनोक्तसूत्रस्य बाधे कबन्तेनाऽऽत्वमिति वाच्यम् उपसर्जनेऽस्य चारितार्थ्येन बाधे मानाभावात् । अन्यस्येति । अनुपसर्जनस्येत्यर्थ उत्तरसूत्रेणेति । अभाषितपुंस्काच्चे 'त्यनेनेत्यर्थ ॥

ननु न सु एतद्सु इत्यवस्थायामकचि कृते वा तत पूर्वमन नञ् तत्पुरुषसमासे कृते ततोऽकचि ( अन्तरङ्गानपि विधी बहिरङ्गो लुग्बाधते ) इति न्यायेनान्तरङ्गात्त्यदाद्यत्वात्प्राक् विभक्त्योर्लुकि पुनर्विशिष्टात्सुपि त्यदाद्यत्व पररूपत्वे च कृते टापि, अनेषकेति सिद्ध्यति । अत्र टाप सुप परत्वात्सुप इति प्रतिषेधान्नेत्यमित्यत आह—एषा द्वा एतयोस्तु सपूर्वयोर्नेत्यमित्यादि ॥

ननु 'अभाषितपुंस्काच्चे 'त्यस्य न भाषित पुमान्येन शब्देन सोऽभाषितपुंस्कस्तस्माद्विहिताऽऽस्थानिकस्याऽत इत्वेत्यर्थस्तत्र विहित विशेषणस्य फलमाह—बहुव्रीहेर्भाषितपुंस्कात्ततो विहितस्य नित्यमिति । अयम्भाव, अविद्यमाना खट्वा यस्या इति विग्रहे शेषाद्विभाषे'ति समासान्तकपो वैकल्पिकत्वेन तदभावपक्षे 'गोस्त्रियोरुपसर्जनस्ये'त्युपसर्जनह्रस्वेऽखट्वाशब्दाट्टापि सुपि, अज्ञातादौ के सुब्लुकि 'केण' इति ह्रस्वे पुनष्टापि अभाषितपुंस्काद्विहिताऽऽकार स्थानिकाऽकारस्याऽभावादेव तद्विकल्पाऽप्राप्तौ प्रत्ययस्थेति नित्यमेवेत्वम् । परविशेषणत्वाऽभ्युपगमे तु आत्स्थानिकाऽकारस्याऽभाषितपुंस्कखट्वशब्दात्परत्वेन वैकल्पिकत्वाऽऽपत्तिरूपदोष, स्यादेवेति ॥

शैषिके कपि तु विकल्प एवेति । अयम्भाव, न खट्वाऽस्येति स्थितौ कपि सुब्लुकि प्रत्ययलक्षणेनाभागद्वयस्य सुबन्तावात्समास संज्ञाया 'समासान्ता' इति, शास्त्रबलेन कप तस्यच समासत्वादुपसर्जनस्त्रीप्रत्ययान्तसमासरूपप्रातिपदिकाऽभावात् 'गोस्त्रियो'रिति ह्रस्वत्वाऽभावेन 'केण' इति प्राप्तह्रस्वत्वस्य 'न कपी'ति निषेधेन 'आपोऽन्यतरस्यामि'ति ह्रस्वे कप प्राग्वर्त्तिखट्वशब्दात्परस्याऽऽपोऽभाषितपुंस्काद्विहितत्वेन तत्स्थानिकाऽकारस्य वैकल्पिकत्वेऽखट्विका अखट्वकेति, ह्रस्वाऽभावे तु अखट्वाकेति त्रिविध रूप निर्बाधमेवेत्यलम् ॥

अपमेव स्त्रीप्रत्ययेषु तदन्तविधि ज्ञापयतीति । नन्वयमर्थोऽत्रानुपपन्न शूद्रा चामहत्पूर्वा जातिरित्येतद्घटकाऽमहत्पूर्वग्रहणस्याऽपि तदन्तविधिज्ञापकत्वादिति चेन्न । एवशब्दस्याऽन्यार्थकत्वेनाऽ

दोषात्। शल पाण्डुरेवेत्यस्य यथा शल पाण्डुरपीत्यर्थस्तथाऽय मर्थे चस्याऽयमपात्यर्थो वाच्य। नचाऽमद्भ्रानियाऽऽचरति घनञ्जुहति तत कर्तृक्विप तादनड्डह् शब्दात् 'षिद्गौरादिभ्यश्चेति ङीषो वार-णायाऽनुपसर्जनाऽऽधिकारस्याऽऽवश्यक्यासदन्तविधिज्ञापकस्य न सम्भवतीति वाच्यम्। तदन्तविधिज्ञापकतापरभाष्यप्रामाण्याद्रा-चारक्विबन्तप्रकृतिकपवृत्तिक्विबन्तानामनभिधानेः ज्ञापकत्वस्य सुस्थ त्वात्। न च पञ्च गावोगा पञ्चगो धनानि यस्य स पञ्चगवधन इत्यत्र पञ्चगवे चन्यापसर्जनत्वेः तत्र ङीपो निवृत्त्यर्थं तस्य चरितार्थत्वेन कथं ज्ञापकमिति वाच्यम्। अर्थवत्सूत्रोक्तस्य (एतत्सम्भाफलभूत विभक्तीतरसमभिव्याहाराऽनपेक्षया स्वार्थविषयकबोधजनकत्वं) रूपाऽर्थवत्त्वस्याऽभावेन टजन्तस्य प्रातिपदिकत्वाऽभावेन ङीपोऽप्रस क्तेः। प्राचीनमतेऽपि स्वपर्यास्तत्वसम्प्रयोज्यबोधजनकत्वप्रकारकप्र यत्नतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वेतदुभयसम्बन्धेन शक्तिवि-शिष्टत्वरूपाऽर्थवत्त्वस्य पञ्चगवे चत्राऽसत्त्वेन तदप्रसक्तेः। नचा ऽऽपिशलिना प्रोक्तमधीते या सा आपिशला ब्राह्मणीत्यत्र ङीप्स्याद स्यार्थमुपसर्जनाधिकारस्य चारितार्थ्यमिति वाच्यम्। प्रोक्ताऽर्थक स्याऽणः स्त्रियामप्रवृत्तेन तदप्राप्तेः। नचाऽध्येत्रर्थकाऽण्निमित्तको ङीप्तु दुर्वार एवेति वाच्यम्। तस्य लुक्त्वेन तन्निमित्तकस्य ङीपोऽप्र सक्तेः। न च प्रत्ययलक्षणेन तत्सत्ता सुलभैवेति वाच्यम्। अण्यो ऽकार इति व्याख्यानेन वर्णाऽऽश्रये प्रत्ययलक्षणाऽभावात्। नचाऽध्ये त्रर्थगतस्त्रीत्वमादाय प्रोक्ताऽण्निमित्तको ङाप् स्यादिति वाच्यम्। स्त्रियामित्यस्य गृह्यमाणविशेषणत्वेन प्रोक्ताऽणोऽध्येत्रर्थगतस्त्रीत्वेऽवि-षयत्वेन तदप्राप्तेः। अत एव काशकृत्स्निना प्रोक्ता मीमांसामधी ते काशकृत्स्ना ब्राह्मणीत्यत्राऽपि न ङीप्। न च प्रोक्तार्थगतस्त्रीत्वमा-दाय पुनर्ङीप् कुतो नेति वाच्यम्। लक्ष्ये लक्षणस्यायस्य आगरूक त्वात्। तस्मादनुपसर्जनाऽधिकारस्य बहुकुरुचरेत्येव व्यावर्त्यम्। तत्र तदन्तविधिं विना प्राप्तिरेव नेति तदन्तविधिज्ञापनमावश्यकमेव सति तु तस्मिन् विशेष्यत्वादनुपसर्जनाऽधिकारसामर्थ्याच्च स्त्रिया मिति प्रातिपदिकविशेषणमेव। स्त्रियामित्यस्य प्रातिपदिकविशेष णत्वाच्च धीवानमतिक्रान्ताऽतिधीवरीति सिद्धम् (१) एवञ्च आपि-शला ब्राह्मणीत्यत्रैव व्यावर्त्यम्। अनुपसर्जनादिति च सामर्थ्या

(१) एवञ्चेति। अनुपसर्जनादिति सूत्रे कृते चेत्यर्थः।

दगृह्यमाणविशेषणमेव, (१) अन्यथाऽधिकारसूत्र व्यर्थमेव स्यात् । क्ङिति ऽपि लघुने न धातो र्याधिरिति न्यायादतो गुण इत्यात्मसंस्कार प्रधानमनुरुध्यते इति न्यायाद्गृह्यमाणविशेषणत्वमेव तस्येति भाव । तदन्तविधिफलन्तु कौम्भकारेयसिद्धि । अन्यथा कुम्भकार्य्या अपत्यमिति विग्रहेऽपि केवलकारीशब्दादपि स्त्रीप्रत्ययान्तत्वात् 'स्त्रीभ्यो ढगि'ति ढगाऽपत्या कुम्भकारेय इत्यापद्येत । नचैकार्थीभावरूपसामर्थ्यस्य समुदायवृत्तित्वेनैकदेशाऽवृत्तित्वात्तस्मात्तद्धितोत्पत्तिर्न स्यादिति वाच्यम । 'तद्धितार्थोत्तरपदसमाहारे चे' त्यनेनोत्तरपदे समासविधानसामर्थ्यादपर्यायस्याऽप्येकार्थीभावमादाय वृत्ते स्वीकारात् । न च (२) (कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमि)ति परिभाषया समुदायादेव ङीबुत्पत्त्या तस्मादेव च ढकि न काऽप्यनुपपत्तिरिति वाच्यम् । उक्तपरिभाषाया कृन्मात्रग्रहण एव प्रवृत्ते स्वीकारादित्यलम् ॥

ननु टिड्ढाणञिति सूत्रेऽनुपसर्जनादित्यधिकारादनुपसर्जनं यट्टिदाद्यन्तं तदन्तं यदन्तं प्रातिपदिकं ततो ङीबित्यर्थे बहवः कुरुचरा यस्यामिति बहुव्रीहौ कुरुचरशब्दस्याऽन्यपदार्थे विशेषणत्वेनोपसर्जनत्वात्र तद्घटितबहुकुरुचरशब्दान्ङीप प्रसक्तिरित्याशयेनाऽऽह— उपसर्जनत्वान्नेह, बहुकुरुचरेति । न च (समासप्रत्ययविधौ प्रतिषेधः) इत्यनेन तदन्तविधिनिषेधाट्टिद्रूपं यत्प्रातिपदिकमित्यर्थस्यैव सम्भवेन नोक्तस्थलीयोक्तापत्ति । नचोक्तार्थस्वीकारे कुरुचरशब्दस्याऽपि टिद्रूपप्रातिपदिकत्वाऽभावान्ङीपोऽप्रसक्त्या कुरुचरीत्यपि न स्यादिति वाच्यम् । (अवयवेऽचरितार्था अनुबन्धा समुदायोपकारका भवन्ती)ति न्यायात्कुरुचरघटकचरेत्यत्राऽनुबन्धस्याऽच

(१) अन्यथेति । अनुपसर्जनादित्यस्यापि प्रातिपदिकविशेषणत्वे इत्यर्थ

(२) कृद्ग्रहण इति । अत्र गतिरनन्तर इति सूत्रेऽनन्तरग्रहण प्रमाणम् । तथा हि, अभ्युद्धृतमित्यादावभे प्रकृतिस्वराऽभावायाऽनन्तरग्रहण तिष्ठति, पर प्रत्ययग्रहणपरिभाषयोद्धृतस्य क्तान्तत्वाभावादेवाभे प्रकृतिस्वराप्राप्ती तदर्थं कृतमन्तरग्रहण स्वर्थं सत्परिभाषा ज्ञापयति,-ज्ञापितायान्त्वस्यामनयोद्धृतस्य क्तान्तत्वात्सिद्धभे प्राप्तस्य प्रकृतिस्वरस्य वारणार्थमनन्तरग्रहण स्वांशे चरितार्थमिति भाव ।

स्त्रियामित्यस्याधिकारात्स्त्रीत्वरूपाऽर्थे गम्यमाने मत्येव तद्विधाना दिति तदर्थं ।

ननु 'दामहायनान्ताच्चे'ति सूत्रे 'सङ्ख्याऽव्ययादेर्ङीप्' इत्यस्मा दव्ययग्रहणस्याऽस्वरितत्वेन भाष्यकृताऽननुवर्तित त्वादुद्दामेत्यत्रोक्त सूत्राऽप्राप्त्या डाप्ङीप्निषेधेषु प्राप्तेषु बहुराजीरूपत्रयम्भवत्येवेत्य त आह—अव्ययग्रहणाऽननुवृत्तेरुद्दामा बडवेत्यत्र डाब्निषेधात पि पक्षे स्त इति । अपिना अन उपधेति ङीपश्च सग्रह, नचोक्त शब्दत्रटकाऽनोऽनर्थकत्वेन कथमन उपधेत्यस्य प्राप्तिरिति वाच्यम् । ( अनिनस्म ग्रहणान्यर्थवता चानर्थकेन तदन्तविधि प्रयोजन्ती )ति परिभाषयाऽ ग्रहणेऽनर्थकस्यापि तस्य ग्रहणादिति भाव ॥

ननु सञ्ज्ञाशब्दानां नियताऽऽनुपूर्वीकत्वेनाऽनादित्वाच्छन्दसि ट एस्यैवाऽनुविधानात्तत्र च ङीवभावविशिष्टस्य प्रयोगासम्भवात्ताद शप्रयोगस्य च 'अन उपधे'त्येव सिद्धौ 'नित्य सञ्ज्ञाछन्दसोरि' ति सूत्र व्यर्थमिति चेन्न । केवलमामकभागधेये'त्युत्तरार्थत्वेन सार्थ क्यात् । नचोत्तरार्थं धृतस्य नित्य सञ्ज्ञाछन्दसोरित्यस्याऽऽरम्भसा मर्थ्यादेव नित्यत्वलाभेऽत्रत्यनित्यग्रहण विफलमेवेति वाच्यम् । उत्तरसूत्रे निकटपानुवृत्त्यर्थत्वेन साफल्यादिति भाव ॥

ननु ममेयमित्यर्थेऽस्मच्छब्दात् 'युष्मदस्मदोरन्यतरस्या खञ्चे' त्यनेनाऽणि 'तवकममकावेकवचने' इति ममकाऽऽदेशे आयचो वृद्धौ मामकेत्यस्याऽणन्तत्वादेव ङीपि सिद्धे 'केवलमामकभागधेये'ति सूत्रस्थ मामकग्रहण व्यर्थमेवेति चेन्न । अणन्ता मामकशब्दाद्यदि ङीप् स्यात्तर्हि सञ्ज्ञाछन्दसोरेवेति नियमार्थत्वेन सार्थक्यादित्यत आह— मामकग्रहणं नियमार्थमिति ।नचानेन मामकशब्दान्ङीप एव विधा नात् ( मामकनरकयोरुपसङ्ख्यानम् ) इत्यत्र मामकग्रहण व्यर्थमिति वाच्यम् । मा मातीति माम माम कायतीति मामिकेत्यत्रेत्वविधा नार्थं तद्ग्रहणस्य सार्थक्यात् । नचाऽत्रापि केवलमामकेत्यस्य प्राप्ति रिति वाच्यम् । भागधेयशब्दसाहचर्य्येण तद्भिन्नात्तस्यैव मामकश ब्दस्यात्र ग्रहणात् । नियमस्य व्यावर्त्यमाह—तेन लोकेऽसञ्ज्ञाया मामिकेति । न च मामकनरकयोरिनिवार्त्तिकाऽऽरम्भसामर्थ्याड्डा बभावकल्पनेन कथ मामिकेत्यस्य नियमव्यावर्त्यत्वमिति वाच्यम् । उक्तवार्त्तिकस्याऽऽप्परत्वाऽभावेऽपीत्वविधानेन चरितार्थत्वात्सा

र्थविरहेण ङीपभावस्य कल्पयितुमशक्यतया ङीपो दुर्वारत्वेनोक्तप्रयोगस्य नियमव्यावर्त्यत्वस्य सुलभत्वादिति भावः ॥

ननु 'तदस्यास्त्यस्मिन्निति मतुप्' इति सूत्रस्य तदिति प्रथमान्तात् षष्ठ्यर्थे सप्तम्यर्थे चाऽस्तिना सामानाधिकरण्ये सति मतुबादिरित्यर्थोऽस्तीत्यत्र तिङर्थकर्त्रा सह प्रथमान्तस्याऽभेदान्वयेन प्रथमान्तान्मतुप् सिद्ध्यति, तथा च, अन्तरस्त्यस्या गर्भ इति विग्रहे मध्ये इत्यर्थकस्याऽन्तःशब्दस्याऽधिकरणशक्तिप्रधानत्वादस्तिसामानाधिकरण्याऽभावान्मतुप् न स्यात् । न चोक्तमतुब्विधायकसूत्रेऽस्तिग्रहणस्याऽस्तिसामानाधिकरण्याऽभावेनाऽस्तिशब्दान्मतुब्विधानार्थत्वादुक्तप्रयोगे मतुप् सुलभ एवेति वाच्यम् । तत्र प्रथमान्तादेव मतुपो विधानात् । अत एवाऽस्तिना सामानाधिकरण्याऽभावादप्राप्तो मतुप् निपात्यते इति भाष्यात् सङ्गच्छते । एवञ्चोक्तरीत्या प्रकृते मतुप् नैव स्यादित्याशङ्क्य समाधत्ते—गर्भिण्या जीवद्भर्तृकायाश्च प्रकृतिभागौ निपात्येते इति । तत्सन्नियोगेन मतुपो विधानं वत्वं तु 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इत्यनेनैव सिद्धमिति भावः ॥

ननु 'पत्युर्नो यज्ञसंयोगे' इति सूत्रे संयोगपदं सम्बन्धोपलक्षणमित्यत आह—यज्ञेन सम्बन्ध इति । क्रिया इत्यर्थः । यद्यपि पतिशब्दः पुंलिङ्गस्तथापि स्वसाध्यकर्तृकयज्ञफलनिरूपितविलक्षणसम्बन्धो यदा स्त्रियां विवक्षितस्तदा पुंवाचकोऽपि तकारोत्तरेकारस्थानिकनकारघटितोऽयमेव पतिशब्दः स्वपूर्वत्वसम्बन्धेन ङीप्विशिष्टः स्वभावात् स्त्रियां प्रवर्तत इति तदाशयः । सम्बन्धश्च यज्ञफलप्रतियोगिकैश्वर्यरूप एव तदाह—तत्कर्तृकयज्ञस्य फलभोक्त्रीति ॥

ननु 'पत्युर्नो यज्ञसंयोगे' इत्यत्राऽधिकृतस्याऽनुपसर्जनादित्यस्य पत्युरिति षष्ठ्यन्तेन सामानाधिकरण्याऽनुरोधात् षष्ठ्यन्तत्वकल्पनादनुपसर्जनस्य पत्युरिति तत्सम्बन्धिनोऽनुपसर्जनस्येत्यस्य 'पूतक्रतोरै'त्युत्तरार्थं 'विभाषा सपूर्वस्ये'त्यत्राऽनुवृत्तावपि न पत्युर्विशेषणत्वं किन्तु पतिशब्दान्तस्येत्याशयेनाह—अनुपसर्जनस्येतीहोत्तरार्थमनुवृत्तमपि न पत्युर्विशेषणं किन्तु तदन्तस्येति । सपूर्वस्येत्यत्र व्याख्यानात्सहशब्दस्य विद्यमानवाचित्वं पूर्वशब्दस्य पूर्वाऽवयवपरत्वं तत्र पतिशब्दस्य विद्यमानपूर्वावयवत्वासम्भवाद्व्यभिचाराच्च सामर्थ्यात् (ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती)ति

प्रतिषेधं बाधित्वा पतिशब्देन तदन्तस्य ग्रहणात्केवलस्य पतिशब्द स्याऽग्राऽभावात्सपूर्वविशेषणसङ्गात्कथमनुपसर्जनस्येति केवल पतिशब्दस्य विशेषणम्भवितुमर्हतीति भाव । अनुपसर्जनस्येत्यस्य तदन्तविशेषणत्वे फलमाह-तेन बहुव्रीहावपीति । दृढ पतिर्यस्या इति विग्रहे पत्युस्तस्याऽनुपसर्जनत्वाद्विकल्पेन नकारे दृढपत्नी दृढपतिरिति रूपद्वयसिद्धि अनुपसर्जनस्येत्यस्य पत्युर्विशेषणत्वे तूक्तविग्रहे पति शब्दस्योपसर्जनत्वाद्रूपद्वय न सिद्ध्येत् । बहवो वृषलपतयो यस्या इति कर्मधारयोत्तरपदबहुव्रीहौ पतिशब्दान्तस्य वृषलपत त्यस्योप सर्जनत्वात्तत्राऽतिप्रसङ्गवारणायेहाऽप्यनुपसर्जनपदसम्बन्ध इत्यर्थ । (१) इदमुपसर्जनस्यापलक्षणम्, अत पतिमतिक्रान्ताऽतिपत्नीति सिद्धमिति भाव ।

ननु 'विभाषा सपूर्वस्ये'त्यत्र सहशब्दस्य विद्यमानाऽवयवया चित्वेन विद्यमानावयवपूर्वस्य पतिशब्दान्तप्रातिपदिकस्य नत्वमित्यर्थे समास एवास्य प्रवृत्ति स्याद्वाक्ये न स्यात् । न च पत्युर्नो यज्ञसंयोगे' इत्यनेन वृषलस्य पत्नीति वाक्येऽपि सुलभ एवान्त्य इति वाच्यम् । तत्राऽपि यज्ञसंयोगे इत्यस्य सत्त्वाद् वृषलत्वेन यज्ञसंयोगाऽभावादस्याऽप्यप्रवृत्तेरित्याशयेनाशङ्कते—अथ वृषलस्य पत्नीति रूपस्ते कथमिति चेदिति । समाधत्ते—पत्नीव पत्नीत्युपचारादिति । अग्निसाक्षिकपाणिग्रहणाश्रयणादित्यर्थ । यज्ञफलप्रतियोगित्वैश्वर्य्ये वत्त्वस्याऽऽरोपादिति केचित् । वृषलस्त्रिया बहुधर्माचरणदर्शनादिव वृषलस्य पत्नी वशिष्ठस्य वेति लोकप्रवाद इत्यन्ये । नन्वेव यज्ञसंयोग इति यावदर्थाऽभावाद्व्यर्थमित्याशङ्क्य समाधानान्तरमाह यद्वेति । वस्तुतस्तु आचारक्विबन्तप्रकृतिककर्तृक्विपि दृढप्रमाणाऽसत्त्वादिय प्रौढोक्ति । पूर्वसूत्रे यज्ञसंयोगे इत्यस्य तु वृषलस्य पति स्त्रीत्यस्य साधनेन साधक्यमिति भाव ॥

ननु 'विभाषा सपूर्वस्ये' त्यत्र पत्युरित्यस्य प्रातिपदिकविशेषणत्वेन 'येन विधिरि'ति तदन्तविधौ पतिशब्दान्तस्येत्यर्थे दृढपत्नी त्यादिसिद्धावययवयवाची पूर्वशब्द किमर्थ इत्याशयेनाऽऽशङ्कते—सपूर्वस्य किमिति । प्रत्युदाहरणमुखेन समाधत्ते-गवां पति' स्त्रीति। अयम्भाव, तदभावे केवलस्यापि पतिशब्दस्य व्यपदेशिवद्भावेन

(१) इदमिति । बहुव्रीहावपीत्यस्य ।

टिपष्ट इति विशेषेणैकरूपद्वयसिद्धि । न च ङीपविधानेनैवोपपत्तौ तद्विहाय ङीप्विधाने को विशेष इति वाच्यम् । स्वरे विशेषादिति भाव ॥

छन्दसि क्नमेके इति । 'वर्णादनुदात्तात्तोपधात्तो न' इत्यनेन, असितपलितयोस्तकारस्य प्राप्त नत्व बाधित्वा क्नमाऽऽदेश तत्सन्नियोगेन ङीप चेच्छन्त्येके आचार्या इत्यर्थ । अत्र छन्दसीत्युक्त्या भाषाया क्नमादेशस्य भाष्यासम्मतत्वात्तत्र गतो गतस्तूर्णमसिक्निका नामित्यादय प्रयोगा प्रामादिका एवेति ग्राह्य । वस्तुतस्तु, छन्दस्येके इत्यन्वयात् छन्दस्येवैके क्नमाऽऽदेशमिच्छन्ति, अन्ये तु भाषायामपीति पर्यवसितोऽर्थ , तथा च नात्र प्रयोगे काऽप्यनुपपत्ति । अत्रैकग्रहणमेव प्रमाणमन्यथा भाष्यकारो नेकग्रहण कुर्यादित्याहुरिति भाव ॥

ननु अवपूर्वकाद्दैपशोधने इत्यस्माद्धातो क्तप्रत्यये 'आदेच उपदेशेऽशिती'त्यात्वे निष्पन्नस्याऽवदातशब्दस्य विशुद्धवाचित्वेन वर्णवाचित्वाऽभावाद्वर्णादनुदात्तादिति ङीपोऽप्राप्त्या टापैवेत्यत आह—
अवदातशब्दस्तु न वर्णवाची किन्तु विशुद्धवाची । तेन अवदाते त्यैवेति । न च, अवदात, सितो गौरो वलक्षो धवलोऽर्जुन इत्यमरकोशेऽवदातशब्दस्य वर्णवाचित्वदर्शनात्तत्र ङीपो दुर्वारत्वेन कथम वदात इत्युक्तमिति वाच्यम् । तथापि विशुद्धत्वसाधर्म्यादवदात शब्दप्रवृत्तिसम्भवादिति भाव ।

लघावन्ते द्वयोश्च बह्वषो गुररिति । अ ते नाम एकस्मिन् लघौ द्वयोर्लघ्वोश्च परतो बह्वषो बह्वच्कस्य गुरुरुदात्त इत्यर्थ ।

ननु पितामहीत्यादिरूपसिद्ध्यर्थं पितृव्यमातुलमातामहे ति सूत्रस्य (मातरि षिच्चे)ति वचनस्याऽऽवश्यकत्वेन तेनैव पित्वविधानात्तल्लक्षणङीपि मातामहीत्यस्याप्युपपत्तौ गौरादिषु तत्शब्दपाठो व्यर्थीभूय ज्ञापयति षिल्लक्षणो टाबनित्य इति तेन दृश्यतेऽनेन दंष्ट्रेत्यादौ दशे ष्ट्रनि न षित्वप्रयुक्तङीपापत्ति किन्तु टापैवेति भाव ।

ननु 'उत्सादिभ्योऽञ्' इत्यनेन तत्र भव इत्यर्थे जनपदशब्दादञि तल्लक्षणङीपि च कृते जानपदीत्यस्य सिद्धौ सूत्रे तद्ग्रहणम्व्यर्थमिति चेन्न । ङीपा रूपोपपत्तावपि ङीप्याद्युदात्तत्वे प्राप्तेऽन्तोदात्तत्वार्थमिहाऽपि तदावश्यकत्वात् । जानपदी वृत्ति । जनपदभवाऽनुवृत्तिर्जीविकेत्यर्थ ।

अमत्रे हि स्त्रीविषयत्वादिति । कमण्डलुरूपे इत्यर्थः । कुण्डी कमण्डलौ जारात्पतिवत्नासुते पुमानिति विश्वकोशात् कमण्डलुवाची कुण्डशब्दो नित्यस्त्रीलिङ्ग इति भावः । यदि तु पिठरे तु न ना कुण्डमिति विश्वकोशे नपुंसकत्वमप्युक्तं पिठराऽमत्रशब्दौ पर्यायौ पिठरः स्थाल्युखा कुण्डमित्यमरे नपुंसकं अमात्रोक्तिरेकदेशाऽनुवाद इत्युच्यते तदाऽनेकविधसंस्थानेषु अमत्रेषु कुण्डव्यवहारेण कुण्डत्वं जातित्वाऽभावादप्राप्तो टाप् विधीयते न तु नियम्यते । एवञ्च स्त्रीविषयत्वादिति जातित्वाऽभावादित्यस्योपलक्षणं बोध्यमिति बहवः । अन्ये तु कमण्डलुसंस्थानस्याऽनुगतत्वात्तद्रूपामात्रवाचिनो जातित्वस्य सत्त्वाज्जातेरस्त्रीत्यनेन ङीपि सिद्धौ सूत्रमिदं नियमार्थमेवाहुः । अमृते जारजाता कुण्डेत्येव । गोणी आवपने चेदिति । आवपने च नित्यस्त्रीत्वादप्राप्तस्य ङीपो विधानम् । आवपनमिति सामान्ये नपुंसकम् ।

ननु गजवाचकनागशब्दस्य जातिवचनत्वेन जातेरस्त्रीविषयादयोपधादित्येव ङीपि सिद्धे व्यर्थमत्र सूत्रे तद्ग्रहणमित्याशङ्क्य समाधत्ते—गजवाची नागशब्द इत्यादिना । कस्याश्चित् स्त्रियाः स्थौल्यगुणदर्शनादारोप्य तत्र नागत्वमिव नागीति प्रयुक्ते तस्यैकव्यक्तिमात्रवृत्तित्वेन जातित्वाभावाज्जातेरिति ङीपोऽप्राप्त्या तदर्थमिह नागग्रहणमावश्यकम् । नचाऽऽरोपितनागत्वविशिष्टस्त्रीबोधकनागशब्दस्य गौणत्वेन (गौणमुख्य) न्यायेन तस्याऽत्राग्रहणान्न ङीप्प्राप्तिरिति व्यर्थमेव तद्ग्रहणमिति वाच्यम् । मुख्यनागशब्दाज्जातेरित्येव ङीप् सिद्धावेतत्सूत्रस्थनागशब्दस्य गौणे ङीप्विधानेनैव चारितार्थ्यात् । किञ्चोक्तन्यायस्य पदकार्यविषयकत्वेनेहाप्रवृत्तेः । विधिरत्राऽनुरोधादस्य सूत्रस्य गौणेऽपि प्रवृत्तेश्चेति भावः । ननु मुख्यनागशब्दाज्जातेरित्येव गौणनागशब्दाच्चैतत्सूत्रेणैव ङीपि सिद्धे सूत्रे स्थौल्यग्रहणं किमर्थमित्याशङ्क्य समाधत्ते-सर्पवाची नागशब्द इति । दैर्घ्यगुणविशिष्टां काञ्चित्स्त्रियमवलोक्य नागत्वं तत्राऽऽरोप्यैव स्त्री नागी सर्पिणीति प्रयुक्ते ततो ङीप्व्यावृत्तये सूत्रे स्थौल्यग्रहणमिति । एवञ्च गौणनागशब्दस्यैवैतत्सूत्रोदाहरणत्वं प्रत्युदाहरणत्वञ्चेति भावः ॥

वोतो गुणवचनात् । अत्र सूत्रे गुणवचनशब्देन समस्तकृदन्ततद्धितान्तसर्वनामजातिसंख्यासंज्ञाशब्दातिरिक्तानां शब्दानां

ग्रहणम् । न च गुणवचनशब्देनेदृशानां ग्रहणे किंप्रमाणमिति वा च्यम् । 'आकडारादेका संज्ञा' इत्येतत्सूत्रस्थभाष्यस्यैव प्रमाणत्वात् । उक्तसूत्रस्थभाष्यपर्यालोचनेन तादृशशब्दानामेवोक्तसंज्ञालाभात् । तत्र हि प्रातिपदिकमात्रस्य गुणवचनसंज्ञाप्रतिपाद्याऽग्रे तद्बाधकत्वेनेता संज्ञा क्रमेण पठिता । गुणवचनेत्यन्वर्थसंज्ञया गुणोपसर्जनगुणिवाचकानामेव तादृशानां गुणवचनसंज्ञेति न रूपादीनां ग्रहणम् । तत्र जातिपक्षेनाऽऽकृतिग्रहणद्रव्यवृत्तिजातिवाचकानामेव ग्रहणादिति दिक् ॥

यत्तु भाष्ये अत्र सूत्रे गुणवचनशब्देन, सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाऽक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुण इति गृह्यते तत्र, एतद्भाष्यस्यैकदेशयुक्तित्वात् । इत्थमुक्तकारिकायाऽन्या । तथा हि, सत्त्व द्रव्यम् तत्रत्र निविशते समवैति, या गुणो द्रव्यमात्र समवेत इत्यर्थः । एतेन सत्ताव्यावृत्ति । सा हि न केवल द्रव्ये व र्तते किन्तु द्रव्यगुणकर्मसु । ननु द्रव्ये एव द्रव्यत्व तत्राऽतिव्याप्तिरित्याह—अपैतीति । अपगच्छतीत्यर्थः । अर्थात्सत्त्वादेवाऽपगच्छतीति यावत् । यथा पीततायां जातायां फलादेर्नीलताऽपैति न तथा द्रव्यत्व द्रव्यादपैति । नन्वेवमपि गात्व गोषु वर्त्तते, अश्वादेश्चाऽपैति तत्राऽतिव्याप्तिरित्यत आह—पृथग्जातिषु दृश्यत इति । गोत्व हि द्रव्यत्वाऽवान्तरनानाजातिषु न दृश्यते गुणस्तु दृश्यते । यथा, अग्रे तृणा नीलता तृणादिष्वपि दृश्यते एतेन सकलजातेर्व्यवच्छेद । एव तर्हि कर्म द्रव्ये वर्तते ततोऽपैति पृथग्जातिषु दृश्यत चेति तत्राऽतिव्याप्तिरित्यत आह—आधेयश्चाक्रियाजश्चेति । उत्पाद्याऽनुत्पाद्य इति तदर्थ । उत्पाद्यो यथा घटादे पाकजा रूपादि, अनुत्पाद्या यथा, आकाशादेर्महत्त्वादि । क्रिया तु सर्वाऽप्युत्पाद्यैव न नित्येति तस्या द्वैविध्याऽभावाद्गुणत्वाऽभाव । नन्वेवमपि द्रव्यस्य गुणत्व प्राप्नोति, अवयविद्रव्य ह्यवयवद्रव्ये निविशते, असमवायिकारणसयोगनिवृत्तौ विनाशात्ततोऽपैति, भिन्नजातिषु हस्तपादादिषु च दृश्यते । द्विविध च भवति । नित्याऽनित्यभेदेन निरवयवस्यात्मपरमाण्वादेर्नित्यत्वात्सावयवद्रव्यस्य तु घटादेरनित्यत्वादत आह—असत्त्वप्रकृतिरिति । अद्रव्यस्वभाव इत्यर्थः ॥

ननु गुणवाचिनो वा ङीपित्यत्रैव मृद्वी मृदुरित्यादिसिद्धौ वा तो गुणवचनादि'त्यत्रात इति यर्थमित्यभिप्रेत्य शङ्कते—उत किमिति समाधत्ते—शुचिरिति । शुचेरौणादिके किदिति तत्सिद्धि । अथ

न्याय', सूत्रे तदग्रहणे शुचिरित्यादौ ङीपापत्ति न च तत्रैव इत्य स्यामत्तेऽजायतग्रानित्यसादत इत्यस्य सम्बन्धेनोदाहरणस्यैवा ऽसिद्ध्या प्रत्युदाहरणदानमसङ्गतमिति वाच्यम्। एवं सति खदिरि यादौ ङीपाऽप्राप्त्या तद्व्यावर्त्तक (स्वाङ्गसंयोगोपधात्)ति वार्त्तिकाऽऽरम्भसामर्थ्यादुक्तसूत्रादत इत्यस्याऽसम्बन्धेनोदाहरणसिद्धो वा धकाऽभावात्प्रत्युदाहरणदानस्य सङ्गतत्वात्। नचोक्तप्रत्युदाहरणे (कृदिकारादक्तिन) इति ङीष् इष्टापत्तौ कथं तस्य प्रत्युदाहरणत्व मिति वाच्यम्। तथा सति शुक्लेत्यस्यैव प्रत्युदाहरणत्वात्। नचा ऽत्राऽपि (स्वाङ्गसंयोगोपधादि)ति निषेधाभावात्ऽऽपत्तिरिति वा च्यम्। साहचर्यादुकारान्तसंयोगोपधादेव तेन निषेधेन तत्रा ऽऽपत्तेर्दुर्वारत्वात्। न च साहचर्यपरिभाषाया अनित्यत्वादुकारा न्तसंयोगोपधादेव तेन निषेध इत्यस्य वक्तुमशक्यतया वार्त्तिकस्य सामान्यार्थकत्वे शुक्लेत्यत्र दोषाभावाद्व्यर्थं तद्ग्रहणमिति वाच्यम्। *तथा सति पीतेत्यत्र ङीप्वारणाय तदावश्यकत्वादिति दिक्* ॥

अक्तिन्नर्थास्तिकम् अजननिरिति। ननु सर्वतोऽक्तिन्नर्थादिति गणसूत्रेऽक्तिन्नर्थादिति किमर्थम्, समुदायद्वाराऽवयव प्रश्न, अथा दवग्रहणं किमर्थमिति प्रष्टुरभिप्राय', न च तदभावेऽजननिरित्यत्र ङीपापत्तिरिति वाच्यम्। अक्तिन्ग्रहणसामर्थ्यादेव तत्र दोषोद्धार सम्भवात्। नचाक्तिन्ग्रहणाभावे क्तिन्नन्तादपि ङीपापत्तिस्तन्ना न्यर्थ तस्याऽवश्यकत्वेन सामर्थ्यविरहात्तेन कथमुक्तस्थलीयदोषो द्धारसम्भव इति वाच्यम्। एवं सति बह्वादिगणे पद्धतिशब्दपा- ठस्य वैयर्थ्यापत्ते। एवञ्च न्यर्थमक्तिन्ग्रहणं ज्ञापयति इकारान्ता यदि ङीप् स्यात्तर्हि क्तिन्नन्तभिन्नादेवेति। एतन्नियमफलादेव पद्ध तिशब्दपाठो गणे चरितार्थ। तथा च क्तिन्नन्तभिन्नत्वेनाजननिरि त्यत्र ङीप् स्यादित्यर्थग्रहणमावश्यकम्। सति तु तस्मिन् क्तिन्नन्त भिन्नत्वेऽपि तदर्थकप्रत्ययान्ततया नात्राऽऽपत्तिलेशोऽपीति भाव ॥

ननु सूत्रे ब्रह्मनशब्दस्याऽग्रहणादानुगलुपपत्त्या ब्रह्माणीति न स्यादित्याशयेनाशङ्कते—कथं ब्रह्माणीति। उत्तरयति—ब्रह्माणमा नयतीत्यादिना। ण्यन्तात् 'अन प्राणने' इत्यस्माण्णिच् 'णेर निटि' इति णिलोपे टिड्ढाणञि' ति ङीपि पूर्वपदात्सञ्ज्ञायामि' ति णत्वं च ब्रह्माणीतिरूपसिद्धिरिति भाव। नवाऽऽनुकि दीर्घो च्चारणं ज्ञापयति क्वचिद् प्रत्याऽऽनुगभावाति ब्रह्माणीतिरूपसिद्धौ

मूलोक्तप्रयासो व्यर्थ इति वाच्यम्। आकारोच्चारणाऽभावे पररूपापत्तेर्दुर्वारत्वेन तद्व्यावृत्त्यर्थं दीर्घोच्चारणस्याऽऽवश्यकत्वात्तत्सामर्थ्यविरहेणोक्तकल्पनाऽसम्भवेन मूलोक्तप्रयासस्य सार्थक्यात्। न चाऽकारोच्चारणसामर्थ्यान्न पररूपाऽपत्तिरिति वाच्यम्। अल्लोपोऽन इति लोपवारणायाऽकारोच्चारणस्याऽऽवश्यकत्वात्तेन पररूपबाधाऽसम्भवात्। न च (लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्) इति परिभाषया अन्त्ययकारघटितस्याऽऽस्यानो लाक्षणिकत्वेनाऽग्रहणान्न लोपप्राप्तिरिति वाच्यम्। 'बहुव्रीहेरूधसो ङीष्' इत्येतत्सूत्रस्थभाष्यादल्लोपोऽन इत्येतद्विषये प्रतिपदोक्तपरिभाषाया अप्रवृत्तेः। न च नकारमात्रविधानेनैवोपपत्तावागमलिङ्गकाकारोच्चारणसामर्थ्यादेव लोपो नेति वाच्यम्। 'न संयोगाद्वमन्तात्' इति निषेधेन लोपाऽप्राप्त्या सर्वाणीत्यत्र ककारोच्चारणस्य चरितार्थत्वात्। एवञ्च लोपव्यावृत्त्यर्थमकारोच्चारणस्याऽऽवश्यकत्वात्तत्सामर्थ्यात्पररूपबाधनाऽसम्भवेन तद्वारणाय दीर्घोच्चारणस्य सार्थक्यात्तेनोक्तकल्पनाया कर्तुमशक्यत्वादुक्तप्रयोगाऽनुपपत्त्या युक्त एव मूलोक्तप्रयास इति दिक्॥

ननु (गतिकारकोपपदानां कृद्भिः सह समासवचनम्) इति परिभाषासत्त्वात्सुबुत्पत्तेः प्रागेव समासे तस्यानाकारान्तत्वेन 'क्रीतात्करणपूर्वात्' इत्यनेन ङीष् न स्यादित्याशङ्क्य समाधत्ते—क्वचिन्न, धनक्रीतेति। 'कर्तृकरणे कृता बहुलम्' इत्येतत्सूत्रस्थबहुलग्रहणेनोक्तपरिभाषाऽनित्यत्वज्ञापनात्क्वचित्सुबुत्पत्त्यनन्तरमपि समास इत्यन्तरङ्गत्वात्समासात्प्रागेव टापि तत्र समासे करणपूर्वत्वेऽप्यदन्तत्वाऽभावान्नोक्ताऽपत्तिरिति समाधातुराशयः। अन्ये तु, उक्तपरिभाषाऽनित्यत्वस्य कर्तृकरणे इति सूत्रे भाष्ये बहुलग्रहणफलत्वेनाऽनुक्तत्वात् हृदिस्थ इत्यादौ पदाऽभावाय 'अम्बाम्बे'ति सूत्रे गवादिग्रहणस्यापि नियमार्थमावश्यकत्वादुक्तपरिभाषाऽनित्यत्वाऽभावादुक्तप्रयोगोपपत्तये सत्यभिधानेऽऽदिर्वा टाबिति वदन्तीत्यलम्॥

अस्वाङ्गपूर्वपदाद्वा। न स्वाङ्गमस्वाङ्गं पूर्वञ्च तत्पदं पूर्वपदम् अस्वाङ्गञ्च तत्पूर्वपदञ्च, अस्वाङ्गपूर्वपदं तस्मादस्वाङ्गपूर्वपदादिति कर्मधारयः। अस्वाङ्गभूतात्पूर्वपदात्परं यत् क्तान्तं तदन्तबहुव्रीहेर्वा ङीषिति तदर्थः। ननु अत्र कर्मधारयाऽऽश्रयणे किम्प्रमाणमिति चेन्न। उत्तरसूत्रस्थभाष्यस्यैव प्रमाणत्वात्। तथा हि, उत्तरसूत्रे भाष्ये कल्याणपाणिपादेत्यादौ ङीष्वारणाय 'अस्वाङ्गपूर्वपदा'दित्यनुवर्त्य कर्मधा

स्भात्, सूत्रे तद्ग्रहणे शुचिरित्यादौ ङीपापत्तिः न च तत्रोत इत्यस्यासत्त्वेऽजाद्यतष्टाबित्यस्मादत इत्यस्य सम्बन्धेनोदाहरणस्यैवाऽसिद्ध्या प्रत्युदाहरणदानमसङ्गतमिति वाच्यम्। एवं सति खरुरित्यादौ ङापोऽप्राप्त्या तद्व्यावर्त्तक (खरुसंयोगोपधान्ने)ति वार्त्तिकाऽऽरम्भसामर्थ्यादुक्तस्यादत इत्यस्याऽसम्बन्धेनोदाहरणसिद्धौ बाधकाऽभावात्प्रत्युदाहरणदानस्य सङ्गतत्वात्। न चोक्तप्रत्युदाहरणे (कृदिकारादक्तिन) इति ङीष इष्टापत्तौ कथं तस्य प्रत्युदाहरणत्वमिति वाच्यम्। तथा सति शुक्लेरस्यैव प्रत्युदाहरणत्वात्। न चात्राऽपि (खरुसंयोगोपधादि)ति निषेधान्नात्राऽऽपत्तिरिति वाच्यम्। उत्साहचर्यादुकारान्तसंयोगोपधादेव तेन निषेधेन तत्राऽऽपत्तेर्दुर्वारत्वात्। न च साहचर्यपरिभाषाया अनित्यत्वादुकारान्तसंयोगोपधादेव तेन निषेध इत्यस्य वक्तुमशक्यतया वार्त्तिकस्य सामान्यार्थकरणे शुक्लेऽत्र दोषाभावाद्व्यर्थं तद्ग्रहणमिति वाच्यम्। तथा सति पातेत्यत्र ङीपवारणाय तदावश्यकत्वादिति दिक्॥

अक्तिन्नर्थात्किम् अजननिरिति। ननु सर्वतोऽक्तिन्नर्थादिति गणसूत्रेऽक्तिन्नर्थादिति किमर्थम्, समुदायद्वाराऽवयवे प्रश्न, अर्थादित्यग्रहणं किमर्थमिति प्रष्टुरभिप्राय, न च तदभावेऽजननिरित्यत्र ङीपापत्तिरिति वाच्यम्। अक्तिन्ग्रहणसामर्थ्यादेव तत्र दोषोद्धारसम्भवात्। न चाक्तिन्ग्रहणाभावे क्तिन्नन्तादपि ङीपापत्तिस्तद्व्यावृत्त्यर्थं तस्याऽऽवश्यकत्वेन सामर्थ्यविरहात्तेन कथमुक्तस्थलीयदोषोद्धारसम्भव इति वाच्यम्। एवं सति बह्वादिगणे पद्धतिशब्दपाठस्य वैयर्थ्यापत्ते। एतच्च यदर्थमक्तिन्ग्रहणं ज्ञापयति इकारान्ताद्यदि ङीप् स्यात्तर्हि क्तिन्नन्तभिन्नादेवेति। एतन्नियमबलादेव पद्धतिशब्दपाठो गणे चरितार्थ। तथा च क्तिन्नन्तभिन्नत्वेनाजननिरित्यत्र ङीप् स्यादित्यर्थग्रहणमावश्यकम्। सति तु तस्मिन् क्तिन्नन्तभिन्नत्वेऽपि तदर्थकप्रत्ययान्ततया नोक्ताऽऽपत्तिलेशोऽपीति भाव॥

ननु सूत्रे ब्रह्मनशब्दस्याऽग्रहणादानुगनुपपत्त्या ब्रह्माणीति न स्यादित्याशयेनाशङ्कते—कथं ब्रह्माणीति। उत्तरयति—ब्रह्माणमानयतीत्यादिना। एयन्तात् 'अन प्राणने' इत्यस्मात्कर्मण्यणि 'णेरनिटि' इति णिलोपे 'टिड्ढाणञि' ति ङीपि 'पूर्वपदात्संज्ञायामि' ति णत्वे च—ब्रह्माणीतिरूपसिद्धिरिति भाव। न चाऽऽनुकि दीर्घोच्चारणं ज्ञापयति क्वचिन्न यत्राऽऽन्यानुग्भवतीति ब्रह्माणीतिरूपसिद्धौ

मूलोक्तप्रयासो व्यर्थ इति वाच्यम्। आकारोच्चारणाऽभावे पररू-
पापत्तेर्दुर्वारत्वेन तद्वारणार्थं दीर्घोच्चारणस्याऽऽवश्यकत्वात्सामा
र्थ्यविरहेणोक्तकल्पनाऽसम्भवेन मूलोक्तप्रयासस्य सार्थकत्वात्। न
चाऽकारोच्चारणसामर्थ्यान्न पररूपाऽपत्तिरिति वाच्यम। अल्ला
पोऽन इति लोपवारणायाऽकारोच्चारणस्याऽऽवश्यकत्वात्तेन पररू
पबाधाऽसम्भवात्। न च (लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रह
णम्) इति परिभाषया अकारघटितस्याऽऽस्यानो लाक्षणिकत्वे
नाऽग्रहणान्न लोपप्राप्तिरिति वाच्यम्। 'बहुव्रीहेरूधसो ङीष्' इत्ये
तत्सूत्रस्य भाष्यादल्लोपोऽन इत्येतद्विषये प्रतिपदोक्तपरिभाषाया अ
प्रवृत्ते। न च नकारमात्रविधानेनेलोपपत्तावागमलिङ्गकारोच्चारण
सामर्थ्यादेव लोपो नेति वाच्यम्। 'न संयोगाद्वमन्तात्' इति निषेधेन
लोपाऽप्राप्त्या सर्वाणीत्यत्र वकारोच्चारणस्य चरितार्थत्वात्। एवञ्च
लोपवारणार्थमकारोच्चारणस्याऽऽवश्यकत्वात्तत्सामर्थ्यात्पररूपबाध
नाऽसम्भवेन तद्वारणाय दीर्घोच्चारणस्य सत्त्वात्तेनोक्तकल्पनायाः कर्तु
मशक्यत्वादुक्तप्रयोगाऽनुपपत्त्या युक्त एव मूलोक्त प्रयास इति दिक्॥

ननु (गतिकारकोपपदानां कृद्भिः सह समासवचनम्) इति
परिभाषासत्त्वात्सुबुत्पत्तेः प्रागेव समासे तस्यानामदन्तत्वेन 'क्रीतात्
करणपूर्वादि' त्यनेन ङीप् न स्यादित्याशङ्क्य समाधत्ते—क्वचिन्न,
धनक्रीतेति। 'कर्तृकरणे कृता बहुलमि' त्येतत्सूत्रस्थबहुलग्रहणेनो
क्तपरिभाषाऽनित्यत्वज्ञापनात्क्वचित्सुबुत्पत्त्यनन्तरमपि समास इत्य
न्तरङ्गत्वात्समासात्प्रागेव टापि तत्र समासे करणपूर्वत्वस्यादन्त
त्वाऽभावान्ङीपोऽप्राप्तिरिति समाधातुराशय। अन्ये तु, उक्तपरि
भाषाऽनित्यत्वस्य कर्तृकरणे इति सूत्रे भाष्ये बहुलग्रहणफलत्वेनाऽ
नुक्तत्वात् इहनिस्थ इत्यादौ षत्वाऽभावाय 'अग्नेस्तुत् स्तोमसोमयोरि'ति सूत्रे गवादि
ग्रहणस्यापि नियमार्थमावश्यकत्वादुक्तपरिभाषाऽनित्यत्वाऽभावादु
क्तप्रयोगोपपत्तये सत्यभिधानेऽजादित्वाट्टाबिति वदन्ति, तन्नो चलम्॥

अस्वाङ्गपूर्वपदाद्वा। न स्वाङ्गमस्वाङ्गं पूर्वं च तत्पदं पूर्वपदं च
स्वाङ्गञ्च तत्पूर्वपदञ्च, अस्वाङ्गपूर्वपदं तस्मादस्वाङ्गपूर्वपदादिति कर्म
धारय अस्वाङ्गभूतात्पूर्वपदात्परं यत् स्वाङ्गं तदन्ताद्बहुव्रीहेर्वा ङी
ति तदर्थ। न चात्र कर्मधारयाऽऽश्रयणे किं प्रमाणमिति चेत्।
सूत्रस्थभाष्यस्यैव प्रमाणत्वात्। तथा हि, तत्सूत्रे भाष्ये
पाणिपादेत्यादौ ङीब्वारणाय 'अस्वाङ्गपूर्वपदान्' इत्यनुवाद

रयाऽऽश्रयणादिहाऽपि तथैवोचितम्। कल्याणपाणिपादेत्यादौ यदु पसर्जनं पाणिपादेति समुदायो नाऽसौ स्वाङ्गं, स्वाङ्गसमुदायस्य स्वाङ्गशब्देनाऽग्रहणात्, यच्च स्वाङ्गं पादेति न तदस्वाङ्गपूर्वपदात्पर मिति न तत्र ङीपित्युक्तम्। नचाऽस्वाङ्गपूर्वपदादित्यत्र कर्मधारया ऽऽश्रयणेऽस्वाङ्गादित्येव सिद्धेऽत्र सूत्रे पूर्वपदादिति व्यर्थमेवेति वा च्यम्। उत्तरसूत्रेऽनुवृत्त्यर्थत्वेन सार्थक्यात्। उत्तरसूत्रे तादृशाऽर्था ऽऽश्रयणेन करमुखादयः प्रयोगा असाधव एवेति। अस्वाङ्गपूर्व पदेत्यत्रापि जातिपूर्वपदादित्यस्य सम्बन्धः। अन्यथा बहुनञादी नामस्वाङ्गत्वेन तत्पूर्वके विकल्पस्य दुर्वारत्वात्। तत्सम्बन्धे सत्येव समाननिमित्तकत्वलाभेन नित्यशास्त्रबाधकत्वमिति भावः।

उपसर्जनात्किम्। शिखेति। अयम्भावः 'स्वाङ्गाच्चे'ति सूत्रे उपसर्जनग्रहणाऽभावेऽनुपसर्जनाऽधिकारेणाऽनुपसर्जनादपि ङीपा परया शिखेति न स्यादित्यावश्यकं तत्, सति तस्मिन् तस्योपसर्जन त्वाऽभावान्न तदापत्तिः। न च कल्याणपाणिपादेत्यादौ टाब्वारणाय, 'अस्वाङ्गपूर्वपदाद्वे'त्यनुवर्तनात्पर्युदासाऽऽश्रयणेन स्वाङ्गभिन्नपूर्व पदात्स्वाङ्गान्ङीबित्यर्थे शिखेत्यादौ पूर्वपदत्वाऽभावान्ङीपोऽप्राप्त्या कथमिदं प्रत्युदाहरणमिति वाच्यम्। एवं सति शोभना शिखा सुशिखेत्यस्यैव प्रत्युदाहरणत्वात्। यत्तु उपसर्जनादित्यस्याऽभावेऽ नुपसर्जनाऽधिकारात्स्वस्यैव वैयर्थ्यमित्याहुः केचित्तन्न "बहुव्रीहे श्चान्तोदात्तादि'त्यत्र बहुव्रीहिग्रहणसामर्थ्यादनुपसर्जनाधिकारानु वृत्तेः। नागेशादयस्तु शिखेत्येव प्रत्युदाहरणं शोभनेत्यादि सुशिखा न्त प्रक्षिप्तः पाठः विशिष्टेऽनदन्तत्वेन सूत्राऽप्राप्तेः। यत्तु भाष्येऽशि खेत्येव प्रत्युदाहरणं तस्याऽप्येकदेश एव तात्पर्यमित्याहुः। न च (उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते) इति परिभाषया प्राक्टापोऽप्राप्त्या युक्तमेव सुशिखेत्यादि प्रत्युदाहरणमिति वाच्यम्। अपवादशास्त्रप्रवृत्तिमन्तरा यत्रोत्सर्ग शास्त्रस्य न प्रवृत्तिस्तत्रैव तत्प्रवृत्तेः। यथा दधतीत्यादौ नाऽत्र तथा, अपवादशास्त्रप्रवृत्तिमन्तराऽपि टाप प्रवृत्तेरित्यलम्॥

ननु 'स्वाङ्गाच्चे'ति सूत्रे स्वाङ्गपदेन स्वमङ्गं स्वाङ्गमिति विव क्षिते सुमुखा शालेत्यत्राऽपि ङीपापत्तिः मुखस्य शालाङ्गत्वात्, सुकेशी रथ्येत्यत्र च न स्यात् केशानां रथ्याऽङ्गत्वाऽभावादित्याह— स्वाङ्गं त्रिधेति। क्रमेणोदाहरति—अद्रवमिति। अद्रवत्वे सति मूर्तिमत्त्वमिति लक्षणं पर्यवसितम्, एवञ्च सुमुखेत्यादौ प्राप्ति

मत्त्वेऽपि लक्षणघटकाद्रवत्वरूपविशेषणाविशिष्टया स्वाङ्गत्वाऽभावात्सूत्राऽप्राप्त्या न ङीप्। सुज्ञानेत्यादावद्रवत्वेऽपि मूर्तिमत्त्वाऽभावान्न ङीप्। ननु सुमुखा शालेत्यत्र ङीप् स्यादित्याह—**प्राणिस्थम विकारजमिति** । प्राणिस्थत्वे सति विकारजभिन्नत्वमिति लक्षणार्थःपम्। एवञ्चोक्तप्रयोगे मुखस्य विकारजभिन्नत्वेऽपि प्राणिस्थत्वाभावात् सुशोफेत्यादौ प्राणिस्थत्वेऽपि विकारजाऽन्यत्वाऽभावान्न ङीप्। ननु सुकेशी रथ्येत्यत्र केशस्येदानीं प्राणिस्थत्वाऽभावात्पूर्वलक्षणेन सिद्धिर्न स्यादित्याह—**अतत्स्थं तत्र दृष्टञ्चेति** । सम्प्रतिप्राणिस्थत्वाऽभावेऽपि प्राणिनि दृष्टं यत्तदपि स्वाङ्गमिति तदर्थः । एवञ्च केशस्य सम्प्रति प्राणिस्थत्वाऽभावेऽपि प्राणिनि दृष्टत्वात्तत्र ङीप्सिद्धिः । ननु प्रतिमादिगतस्तनस्य प्राणिनि कदाऽप्यदृष्टत्वात्सुस्तनी प्रतिमेत्यत्र ङीप् न स्यादित्याह—**तेन चेत्तत्तथायुतमिति** । अप्राणिनोऽपि यदि स्वाङ्गं तेन तज्जातीयेन वस्तुना प्राणी यथा सम्बद्धस्तथाऽप्राणी सम्बद्धश्चेत्तदपि स्वाङ्गमिति तदर्थः । एवञ्चोक्तप्रयोगे न काऽप्यनुपपत्तिरिति दिक् ।

ननु 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधादि'त्यनेनैव विकल्पङीप्विधानात् तुङ्गनासिकी, तुङ्गनासिकेतिरूपद्वयोपपत्तौ 'नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्चे'त्यत्र नासिकोदरग्रहणम्व्यर्थमित्यत आह—**आद्ययोर्बह्वज्लक्षणो निषेधो बाध्यते । पुरस्तादपवादन्यायादिति।** अयम्भावः, नासिकोदरग्रहणाऽभावे नोक्तद्विविधरूपोपपत्तिः, पूर्वसूत्रप्राप्तस्य ङीषो 'न क्रोडादिबह्वचः' इत्यनेन निषेधात् । 'नासिकोदरग्रहणे कृते तु सामर्थ्यादुक्तनिषेधस्य प्रतिषेधेन रूपद्वयोपपत्तिः सुलभैवेति न च नासिकोदरग्रहणसामर्थ्याद्बह्वज्लक्षणनिषेधप्रतिषेधवत् सहनञित्यस्यापि प्रतिषेधेन सहनासिकेत्यादिप्रयोगो न स्यादिति वाच्यम् । ( पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान् ) इति परिभाषया बह्वज्लक्षणनिषेधस्यैव प्रतिषेधेन सहनञित्यस्याऽप्रतिषेधात् । पूर्वोपस्थितबाधेन चारितार्थ्ये पश्चादुपस्थितबाधे मानाऽभाव, श्चानन्तर्याऽभावश्चेत्येतस्योक्तपरिभाषाया बीजत्वादिति दिक् ।

ननु आद्यायश ङीषानपेक्षत्वावच्छिन्नबाधकत्वे सहनञित्यस्याऽपि बाधः स्यादित्याशङ्का समाधत्ते—**ओष्ठादीनाम्पञ्चानामसंयोगोपधादित्यादिना** । अयम्भाव, ( मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान् ) इति न्यायेनोष्ठादिपञ्चानामसंयोगोपधादिति निषेधस्यैव बाधकत्वन्न तु सहनञित्यस्यापीत्यलम् ।

किन्तु साक्षादुपदेशगम्या मत्यत आह—लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्येति । लिङ्गानामिति कर्मणि षष्ठी या सर्वाणि लिङ्गानि न भजति साऽपि जातिरिति प्रथमदलस्यार्थः । न च सर्वशब्दस्य लिङ्गाऽपेक्षत्वेनाऽसामर्थ्यात्कथं णिवसमासाविति वाच्यम् । भाष्यप्रामाण्यात् । आख्यातमाख्यानमुपदेशः । सकृदाख्यातेन निर्ग्राह्या ज्ञानगोचरीभूता जातिरिति द्वितीयदलस्यार्थः । एतेन मूलोक्तमर्थं समायातमिद्धि, तथा असर्वलिङ्गत्वे सत्येकस्या व्यक्ताविव्यादि अयं वृषल इत्युपदिष्टे तत्पित्रादौ पुत्रादौ च यत्न विनैव वृषलत्वज्ञानमुपपद्यत । नन्वेताभ्यामप्यौपगवीकठीत्यादेरसंग्रहोऽनुगतसंस्थानव्यङ्ग्यत्वाऽभावात्सर्वलिङ्गत्वाच्चेत्यत आह—गोत्रञ्च चरणैः सहेति । अपत्यप्रत्ययान्त, चकारात् शाखाऽध्येतृवाची च शब्दो जातिकार्य्यं लभते इत्यर्थः । जातिकार्य्यञ्च ङीषपुंवत्त्वादि । अत्र शास्त्रीयगोत्रस्यैव ग्रहणमिति भावः ॥

ननु अलाबूरिति भाष्योदाहरणादुत इत्यस्याऽसम्बन्धात्कथमुकारान्तत्वलाभ इत्यत आह—रज्वादिपर्य्युदासादुवर्णान्तेभ्य इति । न च पर्य्युदासः सदृशग्राहीति तदाशयः । नचाऽलाबूशब्दादूङ्विधानं किम्फलमिति वाच्यम् । नोङ्धात्वोरि'ति विभक्त्युदात्तत्वप्रतिषेधस्यैव तत्फलत्वात् । न च प्रथमान्तद्वितीयान्तोदाहरणं विहाय तृतीयान्तोदाहरणप्रदर्शनमसङ्गतमिति वाच्यम् । तत्रोक्तप्रयोजनस्याऽसम्भवात् । ऊङ्धात्वोर्यत् परे शसादय उदात्ता न स्युरिति तदर्थः । ऊङि ङकारोच्चारणस्येदमेव प्रयोजनम् । अन्यथा यवाग्वेत्यादावपि निषेधाऽऽपत्तिः स्यात् । न च रूपाणां सवर्णदीर्घेणैव सिद्धावूङि दीर्घोच्चारणमभ्यर्थमिति वाच्यम् । दीर्घोच्चारणस्य प्रश्लेषेणोकारद्वयविधानद्वारा ब्रह्मबन्धूरित्यादिबहुग्रहो परकपनिवृत्त्यर्थत्वेन सार्थक्यात् । न च श्वश्रूरित्येतत्सिद्धयर्थं दीर्घोच्चारणस्याऽऽवश्यकत्वात्तदर्थं तद्वैयर्थ्यमाशङ्कितमिति वाच्यम् । उत्तरूपस्य श्वशुरश्वश्रोतिनिर्देशादेव सिद्धेरिति भावः ॥

उपचारादिति । शफशब्दप्रवृत्तिनिमित्तस्योरुपदार्थ आरोपादित्यर्थः । एवञ्च समासस्योपमानोपमेयभावाऽबोधकत्वात्र पूर्वसूत्रप्राप्तिः । शफश ब्दप्रवृत्तिनिमित्ताऽऽरोपेणोपमानोपमेयभावो निमित्तमित्यन्यदिति भावः ॥

ननु सर्वस्याप्यसत्वेन तत्समभिव्याहारे सहशब्दप्रयोगस्य व्यर्थत्वात्सहोरुरिति प्रयोगस्यैवाऽभावात् महितसहाभ्यां चे) तिरा

त्तिके महच्छब्दग्रहणं व्यर्थमित्यत आह—सहते इति । वृत्तिभ्रमविशि-शेषः । सह विद्यमानाऽरुः यस्या इत्यर्थ इति ध्येयम् । अतिरूमर्ण-यामिति तदभिप्रायः । कमलानि कमलानीत्यादिरप्यलम् ॥

ननु छन्दसि संज्ञायामसंज्ञायां च 'कद्रुकमण्डल्वोश्छन्दसी' त्य-नेनोङ् सिद्धौ संज्ञायामिदं सूत्रं किमर्थमित्यत आह—अच्छन्दो-ऽर्थं वचनमिति । लोके नागमात्रे संज्ञायां कद्रुरिति सिद्ध्यर्थं वचनमिदमिति भावः ॥

नृनरयोर्वृद्धिश्चेति । ननु शार्ङ्गरवस्य नृशब्दात् आयँचो वृद्ध्या 'ऋन्नेभ्य' इति ङीपा च नार्यर्थे सुयोगलक्षणङीपा सिद्धौ नरेति नरग्रहणं व्यर्थमिति चेन्न । नरत्वजातिमात्रप्रतिपादनेच्छाया नरीत्यस्य व्यावृत्त्यर्थं तस्य साधकत्वात् । न च नरशब्देऽचद्वयस्य सत्त्वात्तस्य वृद्धिरिति न शक्यम् । लक्ष्यानुसारादादेरेवाऽचो वृद्धेरिति भावः ॥

ननु 'यूनस्तिरि' त्येनद्विहिततिप्रत्ययस्य तद्धितसंज्ञाविधानस्य प्रातिपदिकसंज्ञासिद्धिरेव फलं शास्त्रोक्तसंज्ञा (लिङ्गविशिष्ट) परि-भाषयेव सिद्धेति व्यर्थमुक्तसूत्रे तद्धिताऽधिकार इत्यत आह—लिङ्ग-विशिष्टपरिभाषयैव सिद्ध इत्यादि । न च तद्धिताधिकारस्यास्य साथत्वेन तद्धिताधिकारस्य कर्तुमुचितत्वादिह करणं व्यर्थमेवेति वाच्यम्, उक्तपरिभाषाऽनित्यत्वज्ञापनार्थत्वेनेह करणस्य सार्थक्यादिति भावः ॥

ननु 'यूनस्तिरि' त्यनेन युवन्शब्दात्तिप्रत्ययविधानेन बहुयुवेत्य-त्रापि तिप्रत्ययो दुर्वार इत्याशङ्क्याह—अनुपसर्जनादित्येवेति । अयम्भावः, उक्तसूत्रेऽनुपसर्जनादेव युवन्शब्दात्तिप्रत्ययविधानात् प्रयोगेऽस्मिन् युवन्शब्दस्य बहवो युवानो यस्यामिति बहुव्रीहावन्यपदार्थ-विशेषणत्वेनोपसर्जनत्वान्न तस्मात्तिप्रत्ययः किन्तु 'ऋन्नेभ्यो ङीप्' इत्य-नेन प्राप्तस्य नान्तलक्षणङीपः 'अनो बहुव्रीहेः' इति निषेधे डाबेव भवति । ननु 'युवतीकरनिमित' इत्यादि प्रयोगोऽनुपपन्न इत्यत आह—योते शत्र-न्तान् ङीपि वा रूपमिति दिक् ॥ इति स्त्रीप्रत्ययप्रकरणम् ॥ इति शुभम् ॥

इति ठक्कुरोपनामकश्रीजनकलालशर्म्मणः कृतौ फक्किकारत्न-मञ्जूषायां स्त्रीप्रत्ययान्तं प्रथमखण्डं समाप्तम् ॥

साहित्यशास्त्रि प० रामतेज पाण्डेयेन सम्पादितः ।